# दैवीकं नगरं, यत्र च मार्गाः अपि कमलाकारेण सन्ति ।



मीनाक्षीमन्दिरम्, मधुरै, तमिलनाडु, भारतम्

मधुरैनगरं वैगैनद्याः तीरे अस्ति । दक्षिणैशियाप्रदेशे स्थितम् अतिप्राचीनं जनवसतिसहितं नगरम् एतत् एव । अत्रत्ये मीनाक्षीमन्दिरे स्थितः सहस्रस्तम्भोपेतः मण्डपः अपूर्वः, अवश्यं द्रष्टुं योग्यः च । आगच्छत । अत्रत्यं सौन्दर्यं स्वयं दृष्ट्वा अमन्दम् आनन्दम् अनुभवत ।

किं न दृष्टानि
प्राचीनानि
कौतुकानि
एतावतापि ?



enchanting tamil nadu
experience yourself



12 X 12 is 144 : Yes, right!



12 X 12 can also be 120!








How's that ?

Take *Junior Chandamama!*
If you buy a copy month after month
you will spend Rs 144 in 12 months.
BUT, if you take out an annual subscription,
you pay only Rs 120 and you get 12 issues!
(This offer valid upto 30th November, 2004)

## New Subscription / Renewal Form

Please enter a one year subscription for *Junior Chandamama* in my name ..........................................

..........................................

(If renewal, Subscription Number ..................................)

Home address ..........................................

..........................................

..........................................

.............................. PIN CODE ..............................

I am enclosing Bank draft / Cheque No ..............................

on .............................. Bank for Rs. 120 (Add Rs. 50 on outstation cheques) / M.O. Receipt no ..............................

.................. issued by .............................. Post office.

## GIFT Subscription Form

I wish to give a one-year GIFT Subscription in favour of

Name ..........................................

Home address ..........................................

..........................................

.............................. PIN CODE : ..............................

Please attach the label below on the first copy.

I am enclosing Bank Draft / Cheque No. ..............................

on .............................. Bank for Rs. 120 ( add Rs. 50 on outstation cheques ) / M.O. Receipt No. ..............

.................. issued by .............................. P.O.

This is a GIFT Subscription, with love from

..........................................

Town / City ..........................................

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ नवम्बर् - २००४ सञ्चिका - ८



भल्लूकमान्त्रिकः

१



क्रोधशीलः मुनिः (वेतालकथा)

१५



सप्तमं दिनम्

२२



विष्णुपुराणम् - ११

४९



## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers
Colony, Ekkatuthangal,
CHENNAI - 600 097
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १४४/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः, बि.नागिरेड्डिः च**

# विविधाः स्वप्नाः

बालदिनं निमित्तीकृत्य सज्जीकृतः बालविशेषाङ्कः एतद्वर्षीयः भवतां हस्तेषु अस्ति । प्रतिवर्षम् एषः विशेषाङ्कः वर्षस्य मध्यभागे, तन्नाम नवम्बर्मासे, प्रकाश्यते । मासोऽयं भवति बालानां कृते 'विशेषकार्यकालः' ।

आ पञ्चभ्यः वर्षेभ्यः चन्दमामा कञ्चन विशेषप्रयत्नं कुर्वती अस्ति । बालैः विरचितानां कथानां सङ्ग्रहाय सा प्रयासं करोति । बालाः एव चित्रकाराः चीयन्ते । ते चेन्नैनगरम् आगत्य चितानां कथानां कृते चित्राणि लिखन्ति । अयं विशिष्टः प्रयत्नः सर्वेषां प्रशंसायै जातः अस्ति ।

विशेषाङ्काय आगतानां कथानां सर्वासां परिशीलनात् कश्चन अंशः ज्ञातः भवति यत् बहवः बालाः स्वप्नघटनाम् आधारीकृत्य एव कथां रचितवन्तः सन्ति इति । स्वप्नम् अवलम्ब्य कथायाः विस्तारः न दोषाय । किन्तु या कथा आसक्तिजनकतया विस्तार्यमाणा भवति तस्याः अन्ते 'एतत्सर्वं स्वप्ने' इति कथनं वाचकं निराशं करोति इति तु न विस्मर्तव्यम् ।

बालाः स्वस्य बाल्ये एव अवलोकनसामर्थ्यं वहन्ति एव । कुतूहलानुभववर्धने आसक्तिः, विषयसङ्ग्रहणे कुतूहलं चापि तेषु भवति एव । एतान् सर्वान् अंशान् अवलम्ब्य वास्तविकजीवनाधारितां कथां ते लिखेयुः इति अपेक्षामहे वयम् ।

अत्रत्याः कथाः अस्मान् लीलया वाचयन्ति । कल्पनाधारिताः, वास्तवजीवनाधारिताः च एताः कथाः भवतां पठनकुतूहलं शमयेयुः एव । एतासां कथानां पठनेन सहैव बालाः स्वस्य भविष्यतः विषये, मातृभूमिविषये च स्वप्नान् अपि पश्येयुः । एतेन अस्माकं राष्ट्रपतेः श्रीमतः डा॰ ए.पि.जे. अब्दुल्कलामवर्यस्य पौनःपुन्येन निवेदनं सार्थकं भवेत् ।

*सम्पादकः –* **विश्रम्**





# 'स्वप्नः दृश्यताम्' इत्येतस्याः स्पर्धायाः परिणामः

माध्यमिकविद्यालये षष्ठकक्ष्यायाम् अध्यापकैः बोध्यमानः पाठः मया सश्रद्धं श्रुतः । परिश्रमेण अध्ययनम् अपि कृतम् । वार्षिकपरीक्षायां मया उत्तमाः अङ्काः प्राप्ताः अपि । कक्ष्यायां द्वितीयं स्थानम् आसादितं मया । एतस्य वर्षस्य अगस्ट्मासस्य पञ्चदशदिनाङ्कीये स्वातन्त्र्यदिनकार्यक्रमे मत्प्रदेशीयः विधानसभासदस्यः मह्यं पुरस्कारं दत्तवान् अपि ।

प्रतिदिनं सायङ्काले, विरामदिनेषु अर्धदिनं यावत् च अहं विद्यालयं गन्तुम् असमर्थान् विकलाङ्गान् छात्रान् अशिक्षितान् जनान् च यथाशक्ति बोधयामि । मम गृहस्य कर्मकर्याः बोधनात् एतत् कार्यम् आरब्धं मया ।

गृहस्य पृष्ठतः मया एकं मधुकर्कटीसस्यं, द्वे सीताफलसस्ये, त्रीणि बीजपूरसस्यानि, एकम् आम्रसस्यं, दश तुलसीसस्यानि च आरोपितानि । गृहस्य पुरतः निम्बतमालादयः आरोपिताः । प्रतिदिनं प्रातः सायं च अहम् एतानि जलेन सिञ्चामि । एतेषु पुष्पफलादीनि दृष्ट्वा अहम् अमन्दम् आनन्दम् अनुभवामि । मार्गपार्श्वे आरोपितानां वृक्षाणां कण्टकवृतिम् अपि कल्पयामि अहम् ।

अहम् अल्पवयस्कः अस्मि इत्यतः नगरं प्रति गन्तुं न शक्नोमि । अतः सुरापानव्यसनिनः द्यूतासक्तान् च दुर्व्यसनमुक्तान् कर्तुं न शक्नोमि । यदा अहं तरुणः भविष्यामि तदा मित्राणां कञ्चित् गणं विरचय्य समाजसेवां करिष्यामि । दुर्व्यसनमग्नान् ततः मोचयिष्यामि च । एषोऽस्ति मम स्वप्नः ।

भाविनि काले उच्चशिक्षणं प्राप्य अहं मण्डलाधिकारी, अन्यविधः उच्चाधिकारी वा भविष्यामि । अनुकरणार्हः भविष्यन् कुलगौरवं वर्धयिष्यामि । जातिभाषादिभेदजाले कदाचिदपि न पतिष्यामि । निष्कपटजीवनं यापयिष्यामि । अनीतिरहितस्य समाजस्य सेवायै तनुं मनः धनं च अर्पयिष्यामि । विकलाङ्गेषु स्नेहवान् भविष्यामि । ते अपि अन्ये इव उत्तमान् अवसरान् यथा प्राप्नुयुः तथा प्रयत्नं विधास्यामि । । देशस्य विकासं दृष्ट्वा आनन्दम् अनुभविष्यामि । तां विकासवार्तां सर्वान् सगर्वं श्रावयिष्यामि अपि ।

एल्. लक्ष्मीनाथः (टि.जि.एस्.वि.हैस्कूल्)
५/१६९७, एस्.एस्.एस्.वीवर्स् कालनी
हनुमान् नगर, ओदोनी - ५१८ ३०१, कर्नूल् जि. (आ.प्र.)

वाचकानां कृते कथास्पर्धा (जून्)

# शठे शाठ्यं समाचरेत्

तेषु ग्रामीणेषु श्रीकरः नाम कश्चन तीक्ष्णबुद्धिः अर्चकस्य लोभप्रवृत्तिं परिज्ञातवान् । सम्यक् समालोच्य तेन एका युक्तिः ग्रामीणानां सम्मुखे उपस्थापिता । सर्वैः ग्रामीणैः सा च अनुमोदिता ।



ततः अर्चकः निवेदितः - 'देवस्य आदेशः तु स्वीकर्तव्यः एव । कौशेयवस्त्रादीनां कृते आयोजनम् अचिरात् एव भविष्यति'' इति । एतत् श्रुत्वा नितरां हर्षितोऽभूत् अर्चकः मनसि एव ।

अन्येद्युः प्रातःकाले सर्वे ग्रामीणाः एकत्र मिलितवन्तः । उपस्थितान् सर्वान् उद्दिश्य श्रीकरः निवेदितवान् - ''भोः महाशयाः ! गतरात्रौ अर्चकस्य विषये चिन्तयन्नेव अहं निद्रां कृतवान् । मम स्वप्ने देवः आगत्य अवदत् यत् यः मम पूजां करोति सः अर्चकः कौशेयवस्त्रैः सुवर्णहारैः च भूषितः भवेत् इति यथा इच्छामि, तथैव सः शुद्धान्तःकरणः जितेन्द्रियश्च भवेत् इत्यपि इच्छामि एव । खाद्यपेयादिभिः लौकिकविषयतोषणसाधनैः अस्पृष्टः, सत्त्वप्रधानचिन्तनैः युक्तः च जनः एव मन्दिरे अर्चकत्वेन भवेत् इति'' इति ।

पूर्ववत् सर्वे ग्रामीणाः 'अयम् अपि देवादेशः' इति अङ्गीकृतवन्तः ।

अग्रिमदिनाद् आरभ्य ते अर्चकाय जलं, नारिकेलजलं, क्षीरं वा अत्यल्पप्रमाणेन क्षुधा-तृषा-शान्त्यर्थमात्राय दातुम् आरब्धवन्तः । उदरपूर्तेः जिह्वास्वादतोषणस्य च वार्ता एव नासीत् । द्वित्रेषु एव दिनेषु अर्चकस्य बुभुक्षा असहनीया जाता । तेन स्वदोषः अङ्गीकृतः, क्षमा च याचिता ।

ग्रामीणाः निश्चिन्ताः जाताः । ततः आरभ्य देवपूजा मन्दिरे निर्विघ्नरूपेण प्राचलत् ।

**एस्. सिद्धार्था**

७, श्रीराम कालोनी, थियसाफिकल सोसैटी, **चेन्नै** - ६०० ०२० (त.ना.)

# नन्दनकाननं सङ्केतयति यत् ..



'नन्दनकाननम्' इत्यस्य पदस्य अर्थः भवति – 'इन्द्रोद्यानरूपं वनम्' इति । इन्द्रस्य उद्यानस्य नाम अस्ति 'नन्दनम्' इति । एतत् नन्दनकाननम् अद्य जगद्विख्यातम् अस्ति, यतः एतदस्ति श्वेतव्याघ्राणाम् आश्रयस्थानम् । अत्र अद्य त्रिंशदधिकाः श्वेतव्याघ्राः सन्ति । एतत् नन्दनकाननम् ओरिस्साराज्यस्य राजधानीभूतात् भुवनेश्वरतः २० कि.मी.दूरे अस्ति । जीव-वैविध्यस्य आश्रयस्थानम् एतत् अरण्यं ४५ वर्षेभ्यः पूर्वम् अभयारण्यत्वेन परिगणितम् अभवत् । अद्य जगति पञ्चाशदधिकासु जन्तुशालासु श्वेतव्याघ्राः द्रष्टुं शक्याः । ते श्वेतव्याघ्राः प्रायः इतः एव प्रेषिताः । १९८० तमे वर्षे गङ्गादीपकयोः त्रीणि अपत्यानि जातानि । तानि श्वेतवर्णीयानि आसन् । अग्रिमेषु वर्षेषु श्वेतव्याघ्रोत्पत्तिः अनुवृत्ता, येन अद्य भारते अन्यदेशेषु च जन्तुशालासु श्वेतव्याघ्रदर्शनं सम्भवं जातम् । नन्दनकानने श्वेतव्याघ्रीयः प्रदेशः १२ हेक्टेर्परिमितः अस्ति । वाहनसञ्चारयोग्यः मार्गः अपि अस्ति अत्र । नन्दनकानने २० हेक्टेर्परिमितः सिंहपरिसरः अपि अस्ति, यश्च जगति एव अद्वितीयः । नन्दनकाननं ५० हेक्टेर्-विस्तीर्णस्य चण्डकारण्यस्य पार्श्वे एव अस्ति । चण्डकारण्येऽस्मिन् एव सुविख्यातः 'काञ्जियासरोवरः' अस्ति । सरोवरोपेते एतस्मिन् अरण्ये ५०विधाः सस्तनजीविनः, २०विधानि उरगकुलानि, ८० विधाः पक्षिजातयः च परस्परसहकारेण शान्त्या च जीवन्ति । नन्दनकानने महामीनानाम् आश्रयभूतानि ३४ स्थानानि अपि सन्ति । ६२० मीटरात्मकः रज्ज्वाधारितमार्गः अपि अत्र अस्ति, यश्च भारतस्य इतरासु जन्तुशालासु द्रष्टुं न शक्यः । बुद्धस्य वचनम् अत्र स्मर्तुं योग्यम् अस्ति । सः वदति – ''अरण्यं नाम तादृशी काचित् विशिष्टा सृष्टिः, या च अपारायाः करुणायाः परोपकारशीलतायाः च आश्रयस्थानं भवति, या च स्वस्य अवस्थित्यै, विस्ताराय, जीवनक्रियायाः विकासाय च कमपि किमपि न याचते'' इति ।





# भल्लूकमान्त्रिकः

## ११

*[राजा दुर्मुखः यदा अरण्ये अटन् आसीत् तदा सामन्तराजः सूर्यभूपतिः तदीयं दुर्गं वशीकृत्य स्वयं सिंहासने उपविष्टवान् । अतः राजा दुर्मुखः भल्लूकमान्त्रिकं प्रार्थितवान् यत् अल्पक्षणार्थं वा मया राजत्वं प्रतिप्राप्तुम् इष्यते इति । यावत् वधकभल्लूकः, उग्रदण्डः, अन्ये च दुर्गसमीपं गताः तावता दुर्गस्य अन्तर्भागतः केचन अश्वारोहिणः पदातयः च निर्गताः । तदनन्तरम्...]*

शूलम् उन्नीय आगच्छतः अश्वारोहिणः, खड्गं गृहीत्वा आगच्छतः पदातीन् च दृष्ट्वा नागमल्लः तदनुचराः च दिग्भ्रान्ताः जाताः ।

तैः सह स्थितयोः दुर्मुखसैनिकयोः स्थितिः अपि तादृशी एव आसीत् । तौ मन्दस्वरेण परस्परचर्चाम् आरब्धवन्तौ ।

नागमल्लः परिस्थितेः गम्भीरताम् अवगत्य अनुचरान् अवदत् - ''सामन्तस्य सैनिकाः एतावन्तः युगपत् एव उपस्थाय आक्रमणाय सज्जाः भवेयुः इति मया न चिन्तितम् आसीत् एव । तथापि न कापि चिन्ता । वधकभल्लूकः राक्षसः उग्रदण्डः च अस्माकं रक्षणाय सज्जौ स्तः एव'' इति ।

''नागमल्लवर्य ! किम् अहम् अस्माकं गजं परावर्तयेयम् ?'' इति कश्चन अनुचरः अपृच्छत् ।

''तथा मास्तु । प्रतिवर्तनेन अस्माकं गौरवं हीयते । या योजना कृता तस्याः अन्वयनाय मया प्रयासः क्रियते । तस्याः साफल्यं भवेत्



वा न वा इति पश्याम । यदि सा सफला न भविष्यति तर्हि अग्रिमाय युद्धाय राक्षसः उग्रदण्डः, वधकभल्लूकः च उद्युक्तौ भवतः एव'' इति अवदत् नागमल्लः ।

''यावत् सैनिकाः अस्मान् न उपसर्पेयुः ततः पूर्वम् एव किमपि क्रियताम्'' इति कश्चन लुण्ठाकानुचरः अवदत् ।

अपरः लुण्ठाकानुचरः सैनिकान् उद्दिश्य – ''अये, किम् एतत् परस्परसम्भाषणं क्रियते ? किम् इतः पलाय्य शत्रुपक्षाश्रयणं चिन्त्यमानम् अस्ति ? स्मर्यताम् । यदि द्रोहः चिन्त्येत तर्हि चर्म अपनीयेत'' इति वदन् खड्गम् उन्नीय कम्पितवान् ।

नागमल्लः गजस्य उपरि उपविष्टान् सैनिकान् क्रोधदृष्ट्या दृष्ट्वा स्वस्य शिरसि बद्धं वस्त्रखण्डं हस्तेन गृहीत्वा इतस्ततः चालयन् अभिमुखम् आगच्छतः सामन्त-सैनिकान् उद्दिश्य – ''अये सैनिकाः ! भवन्तः यत्र सन्ति तत्रैव तिष्ठन्तु । भवतां राजा कुत्र अस्ति ? वयं मैत्रीभावेन अत्र उपस्थिताः स्मः । वयं राजानं दुर्मुखं बन्दीकृत्य अत्र आनीतवन्तः स्मः । यदि योग्यः पुरस्कारः दीयेत तर्हि तं राजाधीनं कृत्वा प्रतिगमिष्यामः'' इति अवदत् ।

एतत् श्रुत्वा अभिमुखम् आगच्छन्तः अश्वारोहिणः गमनं स्थगितवन्तः । अश्वदल-नायकः किञ्चित् अग्रे आगत्य अवदत् – ''भवतां व्यवहारे कापि कपटता वञ्चना वा तु नास्ति खलु ? भवताम् आगमनं दुर्गभित्तौ स्थित्वा राजा मन्त्री च परिशीलयन्तौ स्तः'' इति ।

''यदि वञ्चना एव चिन्तिता स्यात् तर्हि अङ्गुलिगणनीयाः केचन एव कथम् अत्र उपस्थिताः स्याम ? यावत् दुर्मुखः जीवति तावत् अद्यतनराजस्य अपायः निश्चितः एव । यदि राजा योग्यं पुरस्कारं दद्यात् तर्हि वयं दुर्मुखम् अरण्यं प्रतिनयेम'' इति अवदत् नागमल्लः ।

इदानीं किं करणीयम् इति अजानन् अश्व-दलनायकः क्षणकालं स्तब्धः । सः निर्णीतवान् यत् प्रतिगमनं न शोभायै इति । अतः सः श्मश्रु स्पृष्ट्वा खड्गं हस्तेन गृहीत्वा उच्चस्वरेण अपृच्छत् – ''के भवन्तः ? स्वस्य परिचयः आदौ उच्यताम्'' इति

तदा नागमल्लः वस्त्रखण्डं शिरसि बध्नन् अवदत् – ''मम नाम अस्ति नागमल्लः इति । मां तु जनाः 'गणाधीश नागमल्ल' इति सम्बोधयन्ति । अरण्ये ये पशवः जनाः च

प्राप्यन्ते तान् गृहीत्वा योग्येन मूल्येन विक्रयणं मम वृत्तिः'' इति ।

''एतं विषयम् अहं राजानं निवेदयिष्यामि'' इति वदन् प्रस्थितः सः अश्वदलाधिपतिः क्षणकालं स्थित्वा मुखं परिवर्त्य - ''भवतः पृष्ठतः सुदूरे कश्चन उन्नतः राक्षसाकारः अस्ति । अपरः परशुहस्तः भल्लूकः अपि दृश्यते । किं तौ वस्तुतः अपि राक्षसभल्लूकौ उत तादृशं वेषं धृतवन्तौ सामान्यौ ?'' इति अपृच्छत् ।

''एतत् ज्ञातव्यं चेत् भवतः राज्ञा स्वयमेव अत्र आगन्तव्यम् । यदि सः पुरस्कारं दद्यात् तर्हि तं स्वीकृत्य दुर्मुखं तदधीनं कृत्वा तयोः विशिष्टयोः जनयोः परिचयम् अपि अहं कारयिष्यामि'' इति मन्दहासपूर्वकम् अवदत् नागमल्लः ।

अश्वारोही सन्तोषेण शिरः चालयन् खड्गं कम्पयन् सैनिकान् उद्दिश्य - ''अये ! यदि भवत्सु कोऽपि स्वस्थलात् पदमात्रम् अपि पृष्ठतः गच्छेत् तर्हि तस्य शिरश्छेदः भवेत् । अस्माकं मन्त्री यथा चिन्तयति तथा एते वेषधारिणः केचन । अहम् इतः गत्वा राजानं सर्वं निवेद्य अचिरात् एव प्रत्यागमिष्यामि'' इति वदन् दुर्गद्वारं प्रति स्वस्य अश्वं प्रेरितवान् ।

दुर्गस्य भित्तेः उपरि स्थित्वा सामन्तराजः सूर्यभूपतिः तन्मन्त्री च सर्वं पश्यन्तौ आस्ताम् । यदा दलपतिः समीपम् आगतः तदा राजा अपृच्छत् - ''आक्रमणाय गतः भवान् तैः सह किं तत् दीर्घं मन्त्रणं कुर्वन् आसीत् ?'' इति ।



तदा सः दलपतिः प्रवृत्तं सर्वं निवेद्य अवदत् - ''यदि कोऽपि पुरस्कारः दीयेत तर्हि राजा दुर्मुखः भवदधीनः करिष्यते इति वदन्ति ते'' इति ।

दुर्मुखस्य नाम श्रुत्वा आश्चर्यम् अनुभवन् सामन्तराजः अवदत् - ''किं राजा दुर्मुखः इतोऽपि जीवति ? एवं तर्हि सः क्रूरजन्तूनाम् आहारः जातः इति या वार्ता गुप्तचरैः आनीता सा किं मिथ्या एव ? मन्त्रिन् ! तान् मिथ्यावार्ताम् आनीतवतः गुप्तचरान् कारागारे स्थापयतु, तेषां शिरश्छेदं च आदिशतु'' इति ।

तदा मन्त्री चिन्तापूर्णेन स्वरेण - ''महाराज ! ते गुप्तचराः इदानीं दुर्गे न सन्ति । ते पुनरपि अरण्यं प्रति प्रेषिताः सन्ति मया । महाराज ! अन्यः कश्चन प्रमुखः अंशः अत्र चिन्तनीयः अस्ति । मम तु भाति यत् सः राक्षसः भल्लूकश्च वेषधारिणौ न इति ।



वास्तविकौ एव तौ । तैः यः बन्दीकृत्य आनीतः सः राजा दुर्मुखः न स्यात्, राजवेष-धारी अन्यः स्यात्'' इति ।

मन्त्रिणः मुखात् एतत् श्रुत्वा सामन्तः क्रोधेन – ''मार्गदर्शकपदे स्थितः भवान् मया मन्त्रिस्थाने नियोजितः यत् तत् मम दोषः । मन्त्रिस्थाने स्थातुं योग्यता नास्ति भवतः'' इति उक्त्वा दलपतिं पश्यन् – ''भोः, अङ्गुलिगणनीयैः कैश्चित् सह सन्धिप्रस्तावः किमर्थं करणीयः अस्माभिः ? विना विरोधं ते अस्माकम् अधीनताम् अङ्गीकुर्युः । तान् बद्ध्वा दुर्गस्य अन्तः आनयतु । पुरस्कार-दानविचारः मया अनन्तरकाले चिन्तयिष्यते'' इति आदिष्टवान् ।

''महाराज ! सः उन्नताकारः वस्तुतः अपि राक्षसः एव यदि स्यात् तर्हि तान् ग्रहीतुम् उद्युक्ताः वयम् अपायग्रस्ताः स्याम'' इति भीति-मिश्रितेन स्वरेण अवदत् दलपतिः ।

तदा सूर्यभूपतिः कोपं प्रदर्शयन् – ''भवता सह यत् सैन्यम् अस्ति तस्य साहाय्येन न केवलम् एकः राक्षसः, अपि तु राक्षसशतमपि ग्रहीतुं शक्येत । किं भीत्या ? एषोऽहम् अपि आगच्छामि एतदर्थम् । कुत्रास्ति मम युद्धाश्वः ?'' इति वदन् दुर्गभित्तितः अधः आगतवान् ।

तावता कश्चन सैनिकः सामन्तस्य युद्धाश्वम् आनीतवान् । सूर्यभूपतिः तम् आरूढवान् । मन्त्री अपि अपरम् अश्वम् आरुह्य तस्य पार्श्वे स्थितवान् । अपरपार्श्वे दलपतिः अतिष्ठत् । ततः ते त्रयः अपि दुर्गद्वारम् अतिक्रम्य अङ्गण-प्रदेशम् आगतवन्तः ।

आगच्छतः तान् दृष्ट्वा नागमल्लः उत्साहेन अवदत् – ''अहो, मम योजना सफला जायमाना अस्ति । सामन्तराजः, तन्मन्त्री, दलपतिः च इतः एव आगच्छन्तः दृश्यन्ते'' इति ।

सामन्तराजः नागमल्लसमीपं गत्वा अवदत् – ''भोः अस्माकं दलपतिद्वारा मया भवतः आगमनस्य उद्देशः पूर्णतः ज्ञातः अस्ति । मम देशे वसन् मम दुर्गस्य समीपम् एव आगत्य वाणिज्यव्यवहारप्रस्तावः किं भवता क्रियते ? भवान् इदानीम् एव दुर्मुखराजं तान् वेषधारिणः च अत्र आनयतु । भवन्तः सर्वे दुर्गस्य अन्तः गच्छन्तु । तदनन्तरं पुरस्कारदानविषयम् अहं चिन्तयिष्यामि । दुर्मुखं तु आदौ मदधीनं कुर्वन्तु । तस्य शिरसः छेदस्य अनन्तरम् एव अग्रे किं करणीयम् इति चिन्तनं करिष्यते मया'' इति ।

सामन्तराजस्य मुखात् एतत् वचनं श्रुत्वा नागमल्लः अवगतवान् यत् मम योजना सफलतां न गता इति । दुर्मुखस्य विषये महान् आदरः, सूर्यभूपतेः विषये उपेक्षा वा न आसीत् तस्य । किन्तु वधकभल्लूकस्य उग्रदण्डस्य च अपमाननं न सहते स्म सः ।



किम् उत्तरं वक्तव्यम् इति यावत् सः चिन्तयन् आसीत् तावता दुर्मुखस्य उभौ सैनिकौ खड्गम् उन्नीय उक्तवन्तौ – ''महाराजः दुर्मुखः जयतात् । सूर्यभूपते ! भवतः मरणं सन्निहितम् अस्ति । महाराजस्य दुर्मुखस्य साहाय्यं कर्तुम् आगतवत्सु कश्चित् राक्षसः अस्ति । अपरः मन्त्रतन्त्रवेत्ता वधकभल्लूकः अस्ति'' इति ।

दुर्मुखस्य जयकारं श्रुत्वा महान्तं क्रोधं प्राप्तवान् सूर्यभूपतिः मन्त्रिणं दलपतिं च पश्यन् – ''एतौ गर्वोपेतौ सैनिकौ, एताभ्यां सह स्थिताः वेषधारिणः ते अन्ये च सम्यक् दण्डनीयाः । एते इतः पलायनं यथा न कुर्युः तथा जागरूकता वोढव्या इति अश्वारोहिणः पदातीन् च वदन्तु भवन्तः । एतान् यमपुरीं प्रति प्रेषयाम'' इति उक्त्वा कोषात् खड्गम् आकृष्य नागमल्लस्य दिशि स्वस्य अश्वं प्रेरितवान् ।

अपायं लक्षितवान् नागमल्लः स्वस्य गजं पृष्ठतः नीत्वा उग्रदण्डादीनां समीपं गत्वा उच्चस्वरेण – ''वधकभल्लूकप्रभो ! उग्रदण्डवर्य ! मया चिन्तिता योजना विफला जाता अस्ति । सामन्तराजः सेनया सह आगत्य अस्मान् ग्रहीतुं प्रयत्नम् आरब्धवान् अस्ति'' इति अवदत् ।

यद्यपि सूर्यभूपतिः अपमानं कृतवान् आसीत् तथापि स्वस्य राजभक्तिं प्रदर्शयितुम् एषः एव सुवर्णावकाशः इति चिन्तयन् मन्त्री स्वस्य अश्वम् अग्रे प्रेरयन् नागमल्लस्य गजम् अनुसृत्य धावन् उच्चस्वरेण अवदत् – ''अये देशद्रोहिणः ! अस्माकं महाराजः सूर्यभूपतिः भवतां सर्वेषां शिरः कर्तयिष्यति अचिरादेव'' इति ।

अत्रान्तरे दलपतिः दूरे स्थितां सेनाम् आदिष्टवान् – 'अग्रे गम्यताम्' इति । मन्त्री, सामन्तराजः, सूर्यभूपतिः च उग्रदण्डवधकभल्लूकयोः समीपम् आगतवन्तौ ।

सूर्यभूपतिं दूरात् एव दृष्ट्वा नितरां क्रुद्धः दुर्मुखः खड्गं गृहीत्वा गजस्य उपरि तिष्ठन् – ''अये सूर्यभूपते ! मया अन्यदेशस्य स्वायत्तीकरणाय यदा गतम् आसीत् तदा मम दुर्गं वशीकृतवान् खलु भवान् ? एषोऽहं भवतः

शिरः कर्तयिष्यामि'' इति वदन् अन्यैः निषिध्यमानः अपि सामन्तस्य अश्वस्य उपरि अभिपतनाय उद्युक्तः । किन्तु तत्र असाफल्यं प्राप्य सः भूमौ पतितः । क्षणाभ्यन्तरे सः उत्थाय अतिष्ठत् अपि ।

एतत् दृष्ट्वा वधकभल्लूकः करताडनं कुर्वन् अवदत् - ''अहो ! राज्ञः एतादृशं धैर्यम् ! अरण्ये व्याघ्रं सम्मुखीकर्तुं यस्य धैर्यं न आसीत् सः दुर्मुखः स्वस्य दुर्गं दृष्ट्वा सिंहासनं च स्मृत्वा इदानीं महत् धैर्यं प्राप्तवान् अस्ति'' इति ।

राजानं पतितं दृष्ट्वा सूर्यभूपतिः महता आनन्देन - ''शत्रोः सम्मुखीकरणं लीला-विषयः न इति श्रूयते । एतत् कदापि न विस्मर्तव्यम्'' इति वदन् खड्गम् इतस्ततः चालयन् दुर्मुखस्य दिशि स्वस्य अश्वं वेगेन प्रेरितवान् ।

एतत् दृष्ट्वा क्रुद्धः गजस्य उपरि उपविष्टः वन्यः भिल्लयुवकः सामन्तं लक्ष्यीकृत्य बाणं प्रयुक्तवान् । बाणः यद्यपि लक्ष्यच्युतः जातः, तथापि सः व्यर्थः तु न जातः । सः अश्वस्य ललाटे सम्यक् लग्नः । एतस्मात् अश्वः उच्चैः हेषारवं कुर्वन् पृष्ठभागस्थाभ्यां पादाभ्याम् अतिष्ठत् । अतः सूर्यभूपतिः पतनसम्भावनां प्राप्तवान् । किन्तु सः झटिति खलीनम् आकृष्य स्वस्य पतनं कथमपि निवारितवान् । अत्रान्तरे दुर्मुखः मन्त्रिणम् आकृष्य अश्वात् पातयित्वा तदीयम् अश्वम् आरुह्य सामन्तस्य दिशि अश्वं प्रेरितवान् ।

सामन्तः अवगतवान् यत् अहं शत्रुभिः आक्रान्तः जातः अस्मि इति । अतः सः स्वस्य अश्वं परावृत्य प्रतिधावन् सैनिकान् उद्दिश्य - 'सर्वे धावनं कुर्वन्तु' इति आज्ञापित-वान् ।

तदा राजा दुर्मुखः अश्वम् अग्रे प्रेरयन् खड्गं च इतस्ततः चालयन् उच्चैः गर्जितवान् - ''अये सामन्तभूपते ! भीरो ! किम् इतः पलाय्यते ? कीदृशी शूरता भवतः ? किं कोऽपि वीरः रणरङ्गं प्रविश्य कदापि पलायनं कुर्यात् ? धिक् भवन्तम् । यदि धैर्यं स्यात् तर्हि युद्धाय सन्नद्धः भवतु'' इति ।

एतावत् उक्त्वा सः सामन्तम् अनुसरन् धावितवान् ।

- *(अनुवर्तते)*



# वेताल-कथा

## क्रोधशीलः मुनिः

त्रिविक्रमः स्वीकृतं कार्यं परित्यक्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! श्रमपूर्णम् एतत् कार्यम् इतोऽपि कियत्कालं क्रियते भवता ? एतावता भवता कृताः सर्वे यत्नाः विफलाः । तथापि स्वस्य पराजयं न अङ्गीकरोति भवान् । निरन्तर-प्रयत्नः तु श्लाघ्यः एव । भवन्तम् एतादृशे कठिने कार्ये कः नियोजितवान् इति तु न ज्ञायते मया । भवन्तम् अत्र नियोजितवान् कश्चन महात्मा एव स्यात् । महात्मानः स्वस्य मनसि विद्यमानं भावं स्पष्टैः शब्दैः न कथयन्ति । सूच्यतया वदन्ति ते ।



बुद्धिमन्तः एव तेषां कथनस्य तात्पर्यम् अवगन्तुम् अर्हन्ति । एतस्य विषयस्य स्पष्टी-करणाय सुतीव्रनामकस्य कस्यचित् मुनेः कथां विस्तरेण श्रावयामि । मार्गायासपरिहाराय तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

पूर्वं सुतीव्रः नाम कश्चित् घोरं तपः आचरन् आसीत् । तदवसरे उभौ भिल्लौ तत्परिसरे सञ्चरन्तौ आगतौ । बहुधा अटनेनापि किमपि न प्राप्तम् आसीत् ताभ्याम् । अटनात् श्रान्तः कश्चन भिल्लः तत्रैव मूर्च्छां गतः । तदा किं करणीयम् इति अपरेण न ज्ञातम् । सः मुनिं [illegible] । किन्तु मुनेः मुखतः एकम् अपि वचनं न निर्गतम् । अतः सः भिल्लः मुनिं सम्यक् कम्पितवान् ।

एतस्मात् मुनेः तपसः भङ्गः जातः । सः नेत्रे उन्मीलितवान् । नितरां क्रुद्धः आसीत् सः । 'मम तपोभङ्गं कृतवान् भस्मसात् भवतु' इति मनसि एव अवदत् सः । अनन्तरक्षणे एव सः भिल्लः भस्मसात् जातः । किञ्चित्-कालानन्तरं शान्ततां प्राप्तवान् मुनिः मूर्च्छां गतम् उपचारेण सचेतनं कृतवान् । ततः प्रवृत्तं सर्वं निवेद्य सः तं भिल्लम् उद्दिश्य – ''अहं शापं दातुं शक्नोमि । किन्तु शापं प्रतिस्वीकर्तुं मम सामर्थ्यं नास्ति । भवान् एतस्य भस्म सुरक्षिततया स्थापयतु । शापस्य उपसंहाराय किं करणीयम् इति गुरुं पृष्ट्वा आगत्य एतम् उज्जीवयिष्यामि अहम्'' इति उक्त्वा ततः निर्गतवान् ।

सप्ताहं यावत् प्रयाणं कृत्वा सः अपरस्मिन् अरण्ये निवसतः गुरोः सुशान्तस्य समीपं गतवान् । प्रवृत्तं सर्वं श्रुत्वा सुशान्तः अवदत् – ''वत्स ! क्रोधः एव आत्मनः शत्रुः । भवतः क्रोधः भवदीयं तपोबलं हरति । शान्तेः आश्रयणात् एव भवतः हितं भवेत् । भवतः पूर्णं तपोबलं समर्पितं चेदेव सः भिल्लः पुनः उज्जीवितः भवेत्'' इति ।

स्वस्य दुःखं पुनः पुनः प्रकटयन् सुतीव्रः गुरुं सानुरोधम् अवदत् यत् एतदर्थम् अपरं कञ्चित् उपायं वदतु इति । तदा सुशान्तः अवदत् – ''विष्णुपुरे माधवः नाम कश्चित् साधारणः जनः निवसति । सः स्वस्य पुण्यस्य कञ्चित् भागं यदि दद्यात् तर्हि सः भिल्लः पुनः उज्जीवितः भवेत् । अतः भवान् तेन मिलतु'' इति ।

सुतीव्रः तस्मिन् एव दिने विष्णुपुरं प्रति प्रस्थितवान् । मध्येमार्गं वनविहारे रताः काश्चन

युवतयः तेन दृष्टाः । तासु काचित् अपूर्वसुन्दरी आसीत् । सुतीव्रः तत्रैव स्थित्वा तस्याः सौन्दर्यं निर्निमेषदृष्ट्या अपश्यत् ।

सुतीव्रस्य मुनिवेषं निर्निमेषदर्शनं च अवलोकितवती सा तरुणी कोपेन अवदत् - ''भवादृशैः नेत्रे निमील्य तपः आचरणीयम् । भवान् तु मां निर्निमेषदृष्ट्या पश्यति । किम् एतत् शोभावहम् ?'' इति ।

एतानि वचनानि श्रुत्वा मुनिः नितरां क्रुद्धः । सः शापं दत्तवान् - ''स्वस्य सौन्दर्यस्य विषये महान् गर्वः भवत्याः । अतः एतस्मिन् एव क्षणे भवत्याः तत् सौन्दर्यम् अपगच्छतु । भवती कुरूपिणी भवतु'' इति ।

अनन्तरक्षणे एव सा कुरूपिणी जाता । स्वस्य कुरूपं दृष्ट्वा सा उच्चैः रोदनम् आरब्धवती । मुनिः ततः अग्रे अगच्छत् !

सः विष्णुपुरं प्राप्तवान् । समीपम् आगतं कञ्चित् युवकं सः अपृच्छत् - ''भोः, माधवस्य गृहं प्रति केन मार्गेण गन्तव्यम् ?'' इति ।

सः युवकः सुतीव्रं नखशिखान्तं दृष्ट्वा अवदत् - ''माधवस्य पुत्री लावण्यवती । अहं तस्याम् अनुरक्तः अस्मि । मुनयः अपि तपः त्यक्त्वा तां परिणेतुम् इच्छन्तः तस्याः गृहम् आगच्छन्ति इति श्रूयते । किं भवान् अपि तादृशः ? अहं प्रतिस्पर्धिनं न सहे । एतद्विषये प्रतिस्पर्धिनः हनने अपि न सङ्कोचः मम'' इति ।

एतत् श्रुत्वा सुतीव्रः नितरां क्रुद्धः । 'मूकः भवतु भवान्' इति शापं दत्तवान् सः । सः तरुणः मूकः जातः । ततः सुतीव्रः माधवस्य गृहं गतवान् । माधवः गृहस्य पुरतः उपविश्य पूगं छिन्दन् आसीत् । परिचयाद्यनन्तरं सः





सुतीव्रं प्रीत्या अपृच्छत् - ''अपि सुशान्तमुनिः कुशली ?'' इति ।

सुतीव्रः तं प्रणम्य अवदत् - ''सुशान्तवर्यः उक्तवान् यत् भवान् श्रेष्ठः पुण्यात्मा इति । भवतः दर्शनतः मम जन्म सार्थकं जातम् । परमं सौभाग्यं मम'' इति ।

अत्रान्तरे माधवस्य सुन्दरी पुत्री आगत्य सुतीव्रस्य पुरतः कटं प्रसारितवती । सुतीव्रं प्रणम्य मौनेन ततः निर्गतवती च ।

ततः सुतीव्रः माधवम् अपृच्छत् - ''भवता कीदृशं महाकार्यं कृतं येन गुरुवर्यः भवन्तं महात्मा इतिं भावयति ? भवान् प्रतिदिनं कीदृशं कार्यं करोति ?'' इति ।

तदा माधवः अवदत् - ''प्रातः शीघ्रम् उत्तिष्ठामि । यथाशक्ति निर्मलतया स्थातुं प्रयासं करोमि । गृहस्य अन्तः बहिः च कार्यं करोमि । यथाशक्ति अन्येषां साहाय्यं करोमि । समयः प्राप्तः चेत् ग्रन्थानाम् अध्ययनम् अपि करोमि । समये निद्रां करोमि । आवेश-क्रोधोद्रेकादीन् सर्वथा दूरीकृत्य सदा मनसः प्रशान्ततां रक्षामि'' इति ।

तस्य दिनचर्यायां देवपूजायाः ध्यानस्य वा उल्लेखम् अदृष्ट्वा आश्चर्यम् अनुभवन् सुतीव्रः अपृच्छत् - ''किं दिने एकवारम् अपि भवान् भगवतः स्मरणं न करोति ?'' इति ।

''भगवान् कुत्र अस्ति इति चिन्तयति भवान् ? यः भगवान् मयि, भवति, अस्मादृशेषु जनेषु च अस्ति तस्य पार्थक्येन पूजा व्यर्था खलु ? जनसेवा एव जनार्दनसेवा । तपस्या अपि एषा एव'' इति अवदत् माधवः ।

एतत् श्रुत्वा क्रोधं प्राप्तवान् सुतीव्रः अवदत् - ''किं भवान् माम् उपहसति ? मम तपस्या व्यर्था इति खलु भवतः कथनस्य आशयः ?'' इति ।

''महाशय ! मया यत् उक्तं तत् तु मद्विषये । अन्येन क्रियमाणा तपस्या अपि विशेष-प्रयोजनकरी न इति तु मम दृढः अभिप्रायः'' इति अवदत् माधवः ।

तदा नितरां क्रुद्धः सुतीव्रः अवदत् - ''भवादृशः नास्तिकः यथायोग्यं दण्डनीयः एव । एतस्मात् क्षणात् भवतः सञ्चारशक्तिः लुप्ता भवतु । भवतः दृष्टिशक्तिः क्षीणा भवतु । भवान् व्याधिग्रस्तः सन् कष्टानि अनुभवतु'' इति ।

किन्तु सुतीव्रस्य शापस्य परिणामः माधवे कोऽपि न लक्षितः । माधवः स्वस्य पूगच्छेदन-कार्यम् अनुवर्तयन् अवदत् - ''महोदय !



भवान् अस्ति तपोधनः । भवादृशे कोपः जनितः यत् तदर्थम् अहं क्षन्तव्यः । कृपया क्रोधम् उपसंहरतु भवान् । क्षणमात्रेण कस्मिंश्चिदपि परिवर्तनं न भवति'' इति ।

सुतीव्रः आश्चर्यचकितः आसीत् । किं वक्तव्यम् इति न जानाति स्म सः । दुःखपूर्णेन स्वरेण सः अवदत् – ''मम शापः कमपि परिणामं न अजनयत् इति तु आश्चर्याय । मत्तः अपि श्रेष्ठतरः भवान्'' इति ।

''नैव । सर्वथा नेव । ये दोषं कुर्वन्ति तान् तपोबलस्य आधारेण दण्डयितुम् इच्छति भवान् । तस्मात् एव भवतः तपोबलं क्षीयमाणम् अस्ति । भवता एकः भिल्लः भस्मसात् कृतः । काचित् सुन्दरी कुरूपिणी कृता । कश्चित् युवकं भवान् मूकं कृतवान् । एतस्य सर्वस्य कारणतः भवतः तपोबलं सर्वथा विनष्टम् । एकम् अंशम् अहं भवन्तं वक्तुम् इच्छामि । शापग्रस्तानां शापविमोचनाय मां पुण्यं याचितुम् आगतः अस्ति भवान् । यावत् भवतः एषा इच्छा पूर्णा न भवति तावत् भवान् शापेन मां पीडयितुं न अर्हति । इदानीं भवतः इच्छा पूर्णा जाता अस्ति । यस्मै यस्मै भवता शापः दत्तः ते सर्वे इदानीं शापात् विमुक्ताः सन्ति । अतः इदानीं भवान् मह्यं शापं दातुम् अर्हति । स्वस्य तपश्शक्तेः परीक्षां कर्तुम् अपि अर्हति'' इति अवदत् माधवः ।

सुतीव्रः शापदानविचारं परित्यज्य ततः प्रस्थितवान् । पूर्वं येभ्यः शापः दत्तः आसीत् ते सर्वे शापात् मुक्ताः सन्तः पूर्वतनं रूपं स्थितिं वा प्राप्तवन्तः सन्ति इत्यंशः तेन लक्षितः ।

प्रवृत्तं सर्वं सुशान्तं निवेद्य सः अपृच्छत् – ''एवं किमर्थं प्रवृत्तम् ?'' इति ।

तदा सुशान्तः अवदत् – ''तपश्शक्तिः श्रेष्ठा इत्यत्र नास्ति सन्देहः । किन्तु अनुशासनोपेतं जीवनं यापयतः, परोपकाररतस्य च सामान्यस्य मनुष्यस्य यत् पुण्यं भवति तत् क्रोधशीलस्य भवतः तपोबलात् अपि श्रेष्ठम् । सामान्यः मनुष्यः पुण्यवान् भवति चेत् तस्मिन् शापदानशक्तिः न भवति । अतः तस्मात् अन्यस्य कापि हानिः न भवेति'' इति ।

''माधवः शापग्रस्तानां रक्षायै स्वस्य पुण्यस्य दानं कृतवान् । अतः तस्यापि पुण्यं क्षीणं स्यात् । यत् पुण्यं विनष्टं तस्य पुनः सम्पादनाय तेन कियान् कालः अपेक्ष्येत ?'' इति अपृच्छत् सुतीव्रः ।

तदा मन्दहासं प्रकटयन् सुशान्तः अवदत् – ''अन्येन कृतस्य दोषस्य समीकरणाय

पुण्यस्य दानं महापुण्यकरं कार्यम् । अतः भवत्कारणतः माधवस्य पुण्यं प्रवृद्धम् अस्ति । तेन पुण्यं दातव्यम् आपतितं यत् तस्मात् भवतः पापं प्रवृद्धम्'' इति ।

''गुरुवर्य ! या तपश्शक्तिः नष्टा यच्च पापम् आर्जितं तस्य परिहाराय अहं पुनरपि तपः करिष्यामि । एषः एव युक्तः मार्गः'' इति वदन् सुतीव्रः ततः निर्गतवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''महाराज ! सुशान्तः सुतीव्रं यत् उत्तरम् उक्तवान् तस्मात् स्पष्टं यत् सुतीव्रस्य तपश्चरणं सर्वथा व्यर्थम् इति । सुतीव्रः क्रोधं नियन्त्रयितुं शक्नुयात् इति तु न भाति । अतः एव सुशान्तः तं माधवसमीपं प्रेषितवान् आसीत् । तपस्यां सर्वथा अकृतवति सामान्ये गृहस्थे अपि अपूर्वाः शक्तयः भवन्ति इति सुतीव्रः अवगतवान् । एतत् ज्ञात्वा अपि सः तपश्चर्याय यत् उद्युक्तः तत् असमीचीनम् इव किं न भाति ? भवान् तपस्यां परित्यज्य गृहस्थः भवतु इति स्पष्टैः शब्दैः यदि सुशान्तः अवदिष्यत् तर्हि वरम् अभविष्यत् ननु ? तथापि सुशान्तेन तथा किमर्थं न उक्तम् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''सुतीव्रः तामसगुणेन उपेतः । एतादृशाः जनाः वस्तुतः अपि तपश्चरणाय अयोग्याः । तादृशाः गार्हस्थ्यजीवनयापनाय अपि अनर्हाः एव । सुतीव्रस्य मुखात् प्रवृत्तस्य सर्वस्य श्रवणस्य अनन्तरं सुशान्तः अचिन्तयत् यत् एतस्य गृहस्थाश्रमस्य आश्रयात् अपि न कोऽपि विशेषलाभः इति । अतः सूच्यतया उक्त्वा निर्णयाधिकारं सुतीव्राधीनम् एव कृतवान् सः । सुतीव्रः क्रोधशीलः अहङ्कारी च आसीत् इति तु सत्यम्; तथापि सः अनुभवद्वारा अवगतवान् आसीत् यत् मम दुर्गुणाः कथं हानिकारकाः भवन्ति इति । अतः तस्य अहङ्कार-क्रोधादयः अपगताः । तस्मिन् सात्त्विकगुणस्य जागरणं जातम् । अतः सः पुनरपि तपसे निर्गतवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षशाखाम् अवलम्बितवान् ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

**अधस्तनकथा पठ्यताम् -**



राजा राजराजवर्मा महालुण्ठाकं गृहीतवते कस्मैचित् ग्रामरक्षकाय सुवर्णाङ्गुलीयकं दत्तवान् । तदनन्तरदिने कश्चन चोरः कस्यचित् लघुबालकस्य कण्ठात् रजतहारं चोरयन् दृष्टः केनचित् शिक्षकेण । शिक्षकः उच्चैः आक्रोशनम् अकरोत् – 'चोरः चोरः' इति । जनाः सम्मिलिताः । चोरः गृहीतः । एतस्य कारणीभूताय शिक्षकाय राजा वज्रहारं दत्तवान् ।

तदनन्तरदिने कश्चन आस्थानिकः राजानम् अपृच्छत् – "महाराज ! महालुण्ठाकं गृहीतवते ग्रामरक्षकाय भवता एकं सुवर्णाङ्गुलीयकं दत्तम् । किन्तु रजतहारं चोरयन्तं चोरं गृहीतवते शिक्षकाय तु वज्रहारम् एव दत्तम् । किमर्थम् एतत् तारतम्यम् ?" इति ।

एतस्य उत्तररूपेण राजा किम् उक्तवान् स्यात् ?

अधोनिर्दिष्टान् अंशान् मनसि निधाय उत्तरं दीयताम् -

- किं राजा ग्रामरक्षकशिक्षकयोः विषये वस्तुतः पक्षपातम् आचरितवान् ?
- किं राजा महालुण्ठाकचोरयोः विषये तारतम्यभावं वहति स्म ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः - ३०, नवम्बर् - २००४**

नाम ---------------------------- वयः ---------- जन्मदिनाङ्कः -----------

विद्यालयः -------------------------------------------- कक्ष्या -----------

गृहसङ्केतः ------------------------------------------------------------

-----------------------------------------------------------------------

------------------------------------ Pincode ----------------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

*अन्यदेशीयकथावली (फ्रान्स्देशीया कथा)*

# सप्तमं दिनम्

द्वि सहस्राधिकवर्षेभ्यः पूर्वं ब्रिटानी-नामकस्य नगरस्य समीपे कस्यचित् उन्नतस्य भूभागस्य उपरि किञ्चन प्रासादसदृशं भवनम् आसीत् । तस्य उन्नतभूभागस्य अपरस्मिन् भागे समुद्रः आसीत् । समुद्रतीरे आसन् बह्व्यः कृष्णशिलाः । तासाम् अर्धाधिकभागः समुद्रे निमग्नः भवति स्म । ताः शिलाः दैत्याः इव भासन्ते स्म । या नौका रात्रौ तं प्रदेशम् आगच्छति सा ताभिः शिलाभिः घट्टिता सती भग्ना भवत्येव प्रायः ।

तस्मिन् प्रासादसदृशे भवने डोरिझेना-नामिका काचित् सुन्दरी निवसति स्म । सा स्वस्य भवनस्य वातायनस्य पार्श्वे स्थित्वा दीर्घकालं यावत् समुद्रम् एव पश्यन्ती स्थित्वा दीर्घं निःश्वसिति स्म ।

सा समुद्रात् भीता आसीत् । तत्रापि अपायकरस्य शिलामयस्य तीरस्य विषये तस्याः विशेषभीतिः । तस्याः प्रियः पतिः आर्बरः दूरस्थं द्वीपं गतवान् आसीत् । दीर्घः कालः अतीतः चेदपि सः न प्रत्यागतः । 'प्रयाणसमये अपघातः तु न जातः स्यात् खलु ?' इति चिन्तयति स्म सा । 'मम पतिं रक्षतु हे देव !' इति सदा प्रार्थयते स्म अपि ।

पत्युः निर्गमनस्य अनन्तरं वर्षद्वयम् अतीतम् । तथापि तस्य कापि वार्ता नास्ति । जनाः वदन्ति स्म – 'नौकाभङ्गकारणतः आर्बरः तत्सहचराः च मरणं प्राप्तवन्तः स्युः । लुण्ठाकाः वा तेषां सम्पत्तिं वशीकृत्य तान् मारितवन्तः स्युः' इति ।

ओरेलियसः कश्चन धनिकस्य पुत्रः । सः सुन्दर्यां डोरिझेनायाम् अनुरक्तः । वाणिज्यार्थं गतः तस्याः पतिः न प्रत्यागतः इति यदा ज्ञातं तदा सः तस्याः गृहं प्रति पौनःपुन्येन गमनागमनम् आरब्धवान् । 'आर्बरः इदानीं न जीवति । अतः भवती मां परिणयतु' इति तां पुनः पुनः सानुरोधम् अवदत् सः । डोरिझेना तस्मिन् जुगुप्साभावं वहति स्म । तथापि तस्य



धनिककुलोत्पन्नतां, शरीरसामर्थ्यं, ग्रामे स्थितं महान्तं प्रभावं च दृष्ट्वा भीता सा तस्य प्रत्यक्ष-विरोधं कर्तुं न शक्नोति स्म ।

कदाचित् डोरिझेना मन्दिरं गतवती आसीत् । तत्समये तत्र आगतः ओरेलियसः ताम् अपृच्छत् - "प्रिये ! यदि भवती मम परिणयम् अङ्गीकुर्यात् तर्हि अहं भवत्याः निमित्तं यत्किमपि कर्तुं सिद्धः । महान्तं त्यागमपि कर्तुं सिद्धः एव । किं भवती मां परिणेतुं सिद्धा ?" इति ।

डोरिझेना क्षणकालं मौनेन स्थितवती । 'एषः मां पुनः पुनः यथा पीडयेत् तथा कोऽपि उपायः करणीयः मया' इति चिन्तितवती सा - "भवतु ओरेलियस ! अहं भवन्तं परिणेतुं सिद्धा । किन्तु नियमः यत् विवाहात् पूर्वं भवान् समुद्रतीरस्थाः ताः महाशिलाः सर्वाः अपसारयेत् इति । तत् कार्यं समाप्य आगच्छतु । तदा अहं भवन्तम् अवश्यं परिणेष्यामि" इति अवदत् ।

"तत् अहं करिष्यामि एव । कार्यसिद्धेः अनन्तरं सप्तदिनाभ्यन्तरे भवती मम परिणयम् अङ्गीकुर्यात् । एतत् अनुमन्यते खलु ?" इति अपृच्छत् ओरेलियसः ।

"अनुमन्यते मया" इति सधैर्यम् उक्तवती डोरिझेना । तस्याः मनसि स्पष्टम् आसीत् यत् मया सूचितं कार्यं साधयितुं न शक्यम् इति ।

"भवत्या स्मर्तव्यं यत् मन्दिरे एतत् प्रतिज्ञातम् इति । यदि दत्तं वचनं न पाल्येत तर्हि भवत्याः गृहस्य जनाः घोरव्याधिग्रस्ताः भविष्यन्ति, पूर्वजाः च ऊर्ध्वलोकात् च्युताः भविष्यन्ति" इति उक्तवान् ओरेलियसः ।

'मया सूचितं कार्यं सम्पन्नं चेदेव खलु वचनभङ्गस्य प्रसक्तिः भवेत् ? तत् कार्यं तु न



सम्पत्स्यते । अतः घोरपरिणामविषये मया अवधानं दातव्यं नास्ति' इति विचिन्त्य मन्दहासमात्रं प्रदर्श्य किमपि अनुक्त्वा ततः निर्गतवती डोरिझेना ।

ओरेलियसस्य मुखे अपि मन्दहासः आसीत् । किन्तु सः आसीत् उपहास-मिश्रितः । यत् डोरिझेनया उक्तं तस्य साधनं कथम् इति सः बहुधा अचिन्तयत् । एतद्विषये सुहृदां मार्गदर्शनम् अपि अपृच्छत् सः । तदा सुहृदः अवदन् - "किं भवान् न ज्ञातवान् यत् शाश्वतरूपेण भवतः निवारणाय एव सा भवन्तम् एतादृशे असाध्ये कार्ये प्रवर्तितवती इति ?" इति ।

एतत् श्रुतवतः ओरेलियसस्य मनसि भावः उत्पन्नः - 'एतत् कथमपि वाममार्गेण वा साधनीयम् एव । सा माम् अपाकर्तुम् उपायं चिन्तितवती । अतः तां परिणेतुं मया अपि कोऽपि उपायः चिन्तनीयः एव' इति ।

तस्य सुहृत्सु कश्चित् इन्द्रजालविद्यां जानाति



स्म । सहस्राधिकमैलुदूरे गुहायां निवसतः कस्माच्चित् महात्मनः सः एतां विद्यां ज्ञातवान् आसीत् । ओरेलियसः तस्य वासस्थानं गत्वा तं ब्रिटानीनगरं प्रति आनीत-वान् । तीरे स्थिताः ताः महाशिलाः दृष्ट्वा सः ऐन्द्रजालिकः अवदत् – "काञ्चित् भ्रान्तिम् उत्पाद्य अहं सप्ताहं यावत् एताः शिलाः यथा न दृश्येरन् तथा कर्तुं शक्नोमि । किन्तु तस्य प्रभावः सप्ताहमात्रम् एव स्थातुम् अर्हति, न तु ततोऽपि अधिकम्" इति ।

"सप्ताहं यावत् ताः यथा न दृश्येरन् तथा कृतं चेत् पर्याप्तम्" इति उक्तवान् ओरेलियसः । ततः सः ऐन्द्रजालिकः स्वकौशलेन किमपि कृत-वान् । तस्मात् ताः शिलाः अदृश्याः जाताः ।

नितरां सन्तुष्टः ओरेलियसः डोरिझेनायाः गृहं प्रति धावितवान् । किन्तु तत्र तस्य स्वागतं कृतवान् आर्बरः । यदा ओरेलियसः ऐन्द्रजालिकस्य अन्वेषणाय गतवान् आसीत् तदा आर्बरः प्रत्यगतः आसीत् ।

"मित्र ! ओरेलियस ! कथमस्ति भवान् ? महाशिलाः अपसारयिष्यन्ते इति भवता प्रतिज्ञातम् इति मया श्रुतम् । असाध्या विलक्षणा प्रतिज्ञा भवतः । एतादृश्या प्रतिज्ञया मम अनुपस्थितौ मम पत्नीं भवान् रञ्जितवान् यत् तदर्थम् अनेके धन्यवादाः । कृपया अन्तः आगत्य किञ्चित् विश्रान्तिं स्वीकरोतु" इति अवदत् आर्बरः ।

"किं मम प्रतिज्ञा असाध्या ? भवान् एव समुद्रतीरं पश्यतु तावत्" इति गम्भीरस्वरेण अवदत् ओरेलियसः ।

तस्मिन् एव समये डोरिझेना स्वप्रकोष्ठात् बहिः आगता । तया आर्बरेण च समुद्रस्य दिशि दृष्टिः प्रसारिता । तत्र सर्वाः शिलाः अदृश्यतां गताः आसन् । एतेन तौ नितराम् आश्चर्य-चकितौ । डोरिझेनायाः मुखं विच्छायं जातम् ।

"इदानीं मम परिणयः अनुमन्तव्यः एव भवत्या । दत्तस्य वचनस्य परिपालनम् अवश्यं करणीयम्" इति हसन् अवदत् ओरेलियसः ।

डोरिझेना क्षणकालं स्तम्भवत् स्तब्धा सती स्थितवती । ततः सा आत्मानं कथमपि निगृह्य अवदत् – "मया उक्तम् आसीत् यत् सप्ताहाभ्यन्तरे परिणयाङ्गीकारः सूचयिष्यते इति । अतः सप्ताहानन्तरं मम अङ्गीकारं सूचयिष्यामि, न तु ततः पूर्वम्" इति ।

एतत् आक्षेप्तुं न शक्तवान् ओरेलियसः । 'भवतु नाम सप्तमे दिने एव विवाहः । सप्त दिनानि यावत् ऐन्द्रजालिकस्य कृत्यस्य प्रभावः तु स्थास्यति एव । विवाहसमनन्तरम् एव एषा मया

अन्यत्र नेतव्या । यदि तां दूरे नेष्यामि तर्हि सा वस्तुस्थितिं ज्ञातुं न शक्नुयात् एव' इति अचिन्तयत् सः ।

तेषु एव दिनेषु आकाशः सदा मेघाच्छन्नः एव दृश्यते स्म । सप्तमे दिने तु सर्वे मेघाः तन्नगरसमीपे एव सम्मिलिताः । महान् वायुः अपि आरब्धः । धाराकारवृष्टिः प्रवृत्ता । वृष्टितः वायुतः च भीताः जनाः गृहात् बहिः न आगताः एव । नगरस्य सर्वे मार्गाः जनशून्याः एव दृश्यन्ते स्म । महावायुः वृक्षान्, स्तम्भान्, गृहाणि च अपातयत् । कस्मिंश्चिदपि मन्दिरे कोऽपि अर्चकः न उपलभ्यते स्म । ओरेलियसः 'वध्वाः' करग्रहणाय द्वित्रवारं गृहात् निर्गन्तुम् उद्युक्तः । किन्तु तदीयः अश्वः एकं पदम् अपि अग्रे अस्थापयन् प्रत्यगच्छत् । ओरेलियसः असहायः जातः ।

सप्तमं दिनम् अतीतम् । अनन्तरदिने आकाशः निर्मलः जातः । शिलाः यावत् पुनः दृष्टिगोचराः भवेयुः ततः पूर्वम् एव डोरिझेना मन्दिरं प्रति नेतव्या, परिणेतव्या च' इति चिन्तयन् ओरेलियसः डोरिझेनायाः गृहं प्रति वेगेन गतवान् अश्वम् आरुह्य ।

डोरिझेना प्रस्थानाय सन्नद्धा जाता । अश्रुपूर्णनेत्रः आर्वरः शुभम् आशंसितवान् । द्वारम् उद्घाट्य सा गृहात् बहिः आगता ।

ओरेलियसस्य मुखम् आतङ्कग्रस्तं भीतियुक्तं च आसीत् । 'मया कृता वञ्चना यदि डोरिझेनया आर्वरेण च ज्ञायेत तर्हि मम सर्वोऽयं प्रयत्नः विफलः भवेत् । अतः शीघ्रातिशीघ्रं कार्यं साधनीयम्' इति चिन्तयन् आसीत् सः । तावता अकस्मात् भीकरं मेघगर्जनं श्रुतम् । समुद्रतीरे विद्युतः स्फुरिताः । अतः सर्वेषां दृष्टिः समुद्रदिशि गता । अहो आश्चर्यम् ! तत्र महाशिलाः यथापूर्वं दृश्यन्ते स्म । ऐन्द्रजालिकस्य भ्रमोत्पादनकार्यं समाप्तम् आसीत् ।

ओरेलियसस्य मुखं विच्छायं जातम् । सः मूर्च्छां गतः । आर्वरस्य सेवकाः झटिति आगत्य प्रथमोपचारं कृतवन्तः । सचेतनतां गतः ओरेलियसः आर्वरस्य डोरिझेनायाः च पादौ गृहीत्वा – ''कृपया मम अपराधाः क्षन्तव्याः'' इति प्रार्थयमानः ततः वेगेन धावितवान् । तदनन्तरं सः ब्रिटानीनगरे केनापि न दृष्टः एव ।



# वार्ताविशेषः

## देहलीपाठ्यपुस्तके सचिनम् अधिकृत्य पाठः

देहलीराज्यस्य दशम्यैकादशीद्वादशीकक्ष्यीयाः सर्वकारीयविद्यालयस्य च्छात्राः एतस्मिन् शैक्षणिके वर्षे भारतीयक्रीडापटुं सचिन्तेण्डूलकरम् अधिकृत्य पाठं पठिष्यन्ति । स च पाठः सन्दर्शनात्मकः अस्ति । तस्मिन् सन्दर्शने तेण्डूलकरः स्वस्य क्रिकेट्जीवनस्य प्रमुखाः घटनाः विवृणोति । कस्यचित् प्रश्नस्य उत्तररूपेण सः वदति यत् मम यशस्वितायाः कारणानि भवन्ति - महत्त्वाकांक्षा, निरन्तरः अभ्यासः, अविलम्बेन वस्तुस्थितेः ग्रहणं च इति ।



## अत्युन्नतम् अवकरमयं शिखरम् !

एवरेस्ट्शिखरं जगति अत्युन्नतं पर्वतशिखरम् इति ख्यातम् अस्ति । किन्तु १०-१५ वर्षाणाम् अनन्तरं तत् 'अत्युन्नतम् अवकरमयं शिखरम्' इति ख्यातिं प्राप्नुयात् अपि इति वदति जम्लिङ्ग् नार्गे, यश्च एकपञ्चाशतः वर्षेभ्यः पूर्वम् एड्मण्ड्हिलेरिना सह एवरेस्ट्शिखरस्य आरोहणं कृतवतः तेनसिंग्नार्गेवर्यस्य पुत्रः अस्ति । जम्लिङ्गः वदति यत् आहाराणाम् आवरणानि, कागदानि, प्लास्टिक्चषकाः, पटमण्डपादीनि, प्लास्टिक्स्यूताः, काचकूप्यः इत्यादिभिः तत् आकीर्णं जायमानम् अस्ति इदानीम् इति । पर्वतशिकरे २०-३० जनाः युगपत् उपवेष्टुं यथा शक्नुयुः तथा विशालं स्थलम् (२०० चतुरस्रपादविस्तीर्णम्) अस्ति । तत्र अवकरपातनं यदि एवमेव अनुवर्तेत तर्हि विमानस्थानके यथा नीयमानानां वस्तूनां परिवीक्षणं क्रियते तथा अत्रापि करणीयं भवेत् । पर्वतशिखरारोहिणः रिक्तहस्ततयैव गच्छेयुः इति नियमः अपि करणीयः भवेत् ।



# चाम्पेयस्य कथालोकः

प्राचीने काले चाम्पेयः नाम कश्चन शशः निवसति स्म । सः प्रतिदिनं स्वस्य गृहस्य पुरतः स्थितस्य वृक्षस्य अधः उपविश्य कथाः पठति स्म । सः स्नेहशीलः, सत्प्रवृत्तिमान्, बुद्धिमान् च आसीत् । तेन उच्यमानायाः कथायाः श्रवणाय पशुपक्षिप्रभृतयः बहवः उपस्थिताः भवन्ति स्म ।

तस्य शशस्य कथाकथनस्य प्रभावतः वनराजस्य सिंहस्य आस्थानं रिक्तप्रायं जातम् । शृगालाः वृकाः च शशस्य विषये असूयाग्रस्ताः आसन् । ते शशसमीपं न गच्छन्ति स्म एव ।

अथ कदाचित् अरण्ये सञ्चरन् सिंहः कश्चित् पक्षिणम् उद्दिश्य कथां कथयन्तं शशम् अपश्यत् । कथाकथनं यदा समाप्तं तदा पक्षी वृक्षशाखां प्रति अगच्छत् । शशश्च स्वगृहं प्राविशत् । सिंहः तं पक्षिणम् अपृच्छत् - ''किं प्रवर्तते अत्र ?'' इति । सः पक्षी सर्वं वृत्तान्तम् अवदत् । कथाश्रवणकुतूहलमात्रेण पशु-





पक्षिप्रभृतयः सर्वे आस्थाने उपस्थितिम् उपेक्ष्य शशसमीपं गच्छन्तः सन्ति इति ज्ञातवता सिंहेन महान् कोपः प्राप्तः । सः शृगलवृकनायकौ अवदत् - 'सर्वे पशुपक्षिणः आस्थानं प्रति यथा आगच्छेयुः तथा करणीयम्' इति । ततः शृगालवृकनायकौ शशस्य मारणाय योजनां कृतवन्तौ ।

ततः सिंहः संन्यासिवेषम् अधरत् । सः शशाय वार्ताम् अप्रेषयत् यत् आशीर्वादप्राप्त्यर्थं भवता मत्समीपम् आगन्तव्यम् इति । मर्कटः कश्चन एतां वार्तां शशं न्यवेदयत् । यदा शशः स्वगृहात् निर्गन्तुम् उद्युक्तः तदा पक्षी तत्समीपम् आगत्य सिंहस्य दुष्टचिन्तनं तं न्यवेदयत् । किञ्चिदनन्तरं कश्चन वृकः शशस्य गृहम् आगच्छत् । शशः तम् अवदत् - 'इदानीम् अन्धकारप्रसारसमयः । अतः अहं श्वः आगमिष्यामि' इति ।



स्निग्धा पटेल्,
नवमुम्बयी

ततः पक्षी सर्वान् पशुपक्षिणः अवदत् यत् सर्वे प्रातः एव एतत् अरण्यं परित्यज्य गच्छेयुः इति । अतः अनन्तरदिने उषसि एव सर्वे पशुपक्षिणः तत् अरण्यं परित्यज्य अन्यत् अरण्यं गतवन्तः । तस्य अरण्यस्य राजा अभवत् शशः एव । तस्य अरण्यस्य नाम





सायनचन्द्रः,
कोल्कता

'चाम्पेयारण्यम्' इति जातम् ।

वर्षाणि गतानि । चाम्पेयस्य उभौ पुत्रौ जातौ । तौ उभौ अपि तीक्ष्णबुद्धियुक्तौ एव । पित्रा उक्ताः पूर्वतनाः घटनाः स्मरतः स्म तौ ।

अथ कदाचित् कश्चन सिंहशावकः ताभ्यां सह क्रीडितुम् आगतः । तौ गृहं गत्वा पितरम् उक्तवन्तौ – "तात ! अद्य कश्चन सिंहपुत्रः आवाभ्यां सह क्रीडितुम् आगतः । सः तस्यैव सिंहस्य पुत्रः, यश्च भवतः मारणाय प्रयत्नं कृतवान् आसीत्" इति ।

तदा शशः अवदत् – "स तु इदानीं वृद्धः अस्ति । अतः तद्विषये अलं चिन्तया" इति ।

अनन्तरदिने वृद्धः सिंहः तत्पुत्रः च आक्रमणाय आगतौ । सिंहपुत्रः न जानाति स्म यत् स्वस्य प्रियसुहृदोः विषये पितुः वैरभावः अस्ति इति । यदा एतत् ज्ञातं तदा सः निर्णीतवान् यत् अहं गृहं न प्रतिगमिष्यामि इति । वृद्धः सिंहः एकः एव लज्जया प्रतिगतः । सिंहपुत्रः चाम्पेयं स्वस्य निर्णयम् अश्रावयत् ।

स्वस्य पुत्रः चाम्पेयपक्षम् आश्रितवान् इत्यतः इदानीं वृद्धः सिंहः नितरां खिन्नः । स्वस्य दोषं ज्ञातवान् सः चाम्पेयस्य 'कथालोकम्' आगत्य अवदत् –"मित्र ! किम् अहम् अपि भवतः कथां श्रोतुम् अत्र आगन्तुम् अर्हामि ?" इति ।

चाम्पेयः तस्य आगमनम् अङ्गीकृतवान् । ततः ते सर्वे मैत्र्या सुखेन च दीर्घकालं जीवितवन्तः ।

*अधिकारी* – (दूरवाण्या उपाहारमन्दिरं प्रति) मम कार्यालयं प्रति एकं भोजनं प्रेष्यताम् ।

*उपाहारमन्दिरस्वामी* – क्षन्तव्योऽहं श्रीमन् ! वयं कार्यालयं प्रति भोजनं न प्रेषयामः ।

*अधिकारी* – किमर्थं तथा ?

*उ.म.स्वामी* – अस्मकं 'होम् डिलेवरी' व्यवस्थामात्रम् अस्ति ।

**– आर् राघवेन्द्रन् (१२), चेन्नै**








*न्यायाधीशः* – भवतः विकल्पद्वयम् – १० दिनात्मकः कारागारवासः, रू. ५०००/– दानं वेति ।

*अपराधी* – अहो, सौभाग्यं मम । अहं धनस्वीकारम् एव अङ्गीकरोमि ।

**– सेसिल् डि क्रूझ (१०) मुम्बयी**



# दूरदर्शनदर्शनं विना आहारसेवनम्



नन्दिता मेनन्
देहली

"सुरेश ! मध्याह्नभोजने कः पाकः भवतु ?" इति पृष्टवती मेघना स्वपुत्रम् ।

"यः कोऽपि भवतु नाम" इति अवदत् सुरेशः दूरदर्शनात् दृष्टिम् अनपसारयन् एव । दूरदर्शने दत्तदृष्टिः एव सः उपाहारं सेवमानः आसीत् ।

मेघना पुत्रस्य व्यवहारस्य विषये नितरां खिन्ना । सुरेशः बुद्धिमान् बालकः एव । क्रीडादिषु अपि अग्रगण्यः सः । तस्य एकम् एव दौर्बल्यं नाम आहारसेवनसमये दूरदर्शनदर्शनं स्यादेव इति इच्छति सः । लघुनः खाद्यस्य सेवनसमये अपि दूरदर्शनं पुरतः स्यादेव । बाल्यकाले मातापितरौ एतद्विषये अधिकम् अवधानं न दत्तवन्तौ । किन्तु यथा यथा बालः प्रवृद्धः तथा तथा तस्य एषा प्रवृत्तिः अपि प्रवृद्धा । एतस्याः निवारणाय मातापितरौ तं बहुधा तर्जितवन्तौ, कदाचित् ताडितवन्तौ अपि । तथापि बालस्य व्यवहारे परिवर्तनं न जातम् ।

शालायां दूरदर्शनं न भवति खलु आहारसेवनावसरे ? अतः सुरेशः गृहात् नीतम् अपि आहारं तत्र न सेवते स्म एव ।

कदाचित् कार्यालयतः प्रत्यागतः पिता यथापूर्वं दूरदर्शनदर्शनपुरस्सरम् आहारं सेवमानं पुत्रम् अपश्यत् । पितुः आगमनम् अपि न लक्षितं पुत्रेण । एतस्य एषा प्रवृत्तिः कथं निवारणीया इति पिता क्षणकालं चिन्तनम् अकरोत् । कश्चन उपायः तस्य मनसि आगतः । दूरदर्शनतन्त्रज्ञस्य साहाय्येन सः दूरदर्शनं कार्यानुपयोगि अकरोत् ।



अनन्तरदिने विद्यालयतः प्रत्यागत्य सुरेशः आहारसेवनाय दूरदर्शनस्य पुरतः उपविष्टवान् । किन्तु दूरदर्शनं कार्यं न करोति स्म । सः नियन्त्रकस्य नोदनं पुनः पुनः अकरोत् । विद्युत्सम्पर्कस्य परिशीलनम् अपि अकारेत् । महान् प्रयत्नः कृतः चेदपि दूरदर्शनं कार्यप्रवृत्तं न अभवत् एव ।

सायं क्रीडनाय सः गृहात् निर्गतः । महती बुभुक्षा तं बाधते स्म । दूरदर्शनस्य दर्शनं विना



देवीप्रसन्न बेहरा, मयूरभञ्ज

आहारसेवनं कल्पनासाध्यम् अपि न आसीत् । सायं पिता कार्यलयात् यदा प्रत्यागतः तदा सुरेशः पितरम् अवदत् – 'दूरदर्शनं कार्यं न करोति' इति । तदा पिता अवदत् – ''मम आरोग्यम् अद्य सम्यक् नास्ति । श्वः तद्विषये चिन्तयिष्यामि'' इति ।

''कथम् एतत् शक्येत ? दूरदर्शनस्य दर्शनं नास्ति चेत् मह्यं भोजनं सर्वथा न रोचते इति किं भवान् न जानाति ? महती बुभुक्षा मम । आ प्रातः मया किमपि न खादितम् एव । यतः गृहे दूरदर्शनं कार्यं न कारेति'' इति अश्रुपूर्णनेत्रः सुरेशः उक्तवान् ।

''यदि बुभुक्षा अस्ति तर्हि पाकशालां गत्वा खादतु । अद्य दूरदर्शनस्य समीकारणं तु सर्वथा न शक्यते'' इति दृढस्वरेण अवदत् पिता ।

सुरेशः एतद्विषये समर्थनं निरीक्षमाणः मातुः मुखम् अपश्यत् । किन्तु माता किमपि अवदन्ती ततः उत्थाय प्रकोष्ठं गतवती । किं करणीयम् इति अजानन् गृहे सर्वत्र अटितवान् सुरेशः । रात्रिभोजनसमये व्यथाम् अनुभवन् एव सः स्थालिकायाः पुरतः उपविष्टवान् । भोजनं न अरोचत । अतः पुनरपि उत्थाय दूरदर्शनं प्रवर्तयितुं प्रयासं कृतवान् सः । किन्तु साफल्यं न प्राप्तम् । नितरां खिन्नः अभवत् सः । 'यावत् रोचते तावत् खादतु' इति अनुनयपूर्वकम् उक्तवती माता ।



सुरेशः स्वस्य स्थालिकायां दृष्टिपातं कृतवान् । स्थालिकायां भिण्डीनकनिर्मितं व्यञ्जनं, रोटिका, सूपः इत्यादिकम् आसीत् । 'एतत् सर्वं मह्यं रोचते वा न वा' इति सः क्षणं यावत् अचिन्तयत् । इतः पूर्वम् एतादृशं चिन्तनं कदापि न प्राप्तम् आसीत् तेन । यतः खादनसमये रुचिविषये कदापि अवधानं न दत्तम् आसीत् तेन । अद्य व्यञ्जनं तस्मै अरोचत । सम्यक् एव भोजनं कृतवान् सः ।

द्वित्रदिनाभ्यन्तरे सः अवगतवान् यत् दूरदर्शनस्य दर्शनं नास्ति चेदपि भोजनं कर्तुं शक्यते इति । मित्राणां, विद्यालयस्य, अध्यापकानां च विषये कथनम् अपि आरब्धवान् सः । एतत् दृष्ट्वा मातापितरौ नितरां सन्तुष्टौ । यतः बहोः कालतः एषा एव प्रवृत्तिः ताभ्यां निरीक्ष्यमाणा आसीत् ।

गच्छता कालेन सुरेशः दूरदर्शनस्य दर्शनं विनैव भोजनकरणम् अभ्यस्तवान् ।



# कोषाध्यक्षपदे नियुक्तिः



के. स्नेहा
हैदराबाद्

विक्रमसेनः स्वर्णपुर्याः राजा । कदाचित् तस्य देशस्य कोषाध्यक्षः आकस्मिकतया मृतः । कोषाध्यक्षपदं शासनदृष्ट्या अतिप्रमुखम् इत्यतः तस्मिन् स्थाने कः नियोक्तव्यः इति राज्ञा बहु चिन्तनं कृतम् । कोषाध्यक्षपदाय चतुरः दक्षः च जनः आवश्यकः इति घोषणा कृता । तत् पदम् अपेक्ष्य बहवः आगताः । तेषु कः नियोक्तव्यः इति राज्ञा न ज्ञातम् । अतः सः एतत् दायित्वं मन्त्रिणे समर्पितवान् ।

सर्वेषां परीक्षणस्य अनन्तरम् उभौ चितौ मन्त्रिणा । तयोः नाम आसीत् सुनन्दः विशालः चेति । उभौ अपि ज्ञानेन, बुद्धिमत्तया च समानौ एव । मन्त्री तयोः नाम राज्ञे दत्तवान् । ततः राजा मन्त्री च सम्भूय परस्परं चर्चां कृत्वा एकां योजनां रचितवन्तौ योग्यस्य अभ्यर्थिनः चयनाय ।

ततः राजा उभौ अपि आहूय एकैकस्मै अपि एकैकं सुवर्णनाणकग्रन्थिं दत्त्वा अवदत् - ''अत्र एकैकस्मिन् अपि शतं सुवर्णनाणकानि सन्ति । एतं ग्रन्थिं स्वीकृत्य भवन्तौ अद्य अस्माकम् अतिथिगृहे वासं कुरुताम् । श्वः प्रातः एतानि शतं नाणकानि प्रत्यानेतव्यानि भवद्भ्याम्'' इति ।

उभौ अपि धनस्यूतं स्वीकृत्य अतिथिगृहं प्रति गतवन्तौ । मध्यरात्रे केचन लुण्ठाकाः हठात् आक्रमणं कृत्वा तयोः धनग्रन्थिम् अपहर्तुं प्रयासं कृतवन्तः । एतौ धैर्येण तान् सम्मुखीकृतवन्तः । तदा चोराः पलायितवन्तः । तेषु एकः गृहीतः । तं राजाधीनं





पुनीत जे. हिरेमठः
बेङ्गलूरु

कृतवन्तौ तौ ।

अनन्तरदिने तौ राज्ञः समीपं गत्वा रात्रौ यद्यत् प्रवृत्तं सर्वम् उक्त्वा धन-स्यूतं राज्ञे समर्पितवन्तौ । राजा तयोः धैर्यस्य प्रशंसां कृत्वा स्वकीयं कञ्चित् अधिकारिणम् उक्तवान् यत् स्यूतस्थं धनं गणयतु इति । अधिकारी धनं गणितवान् । सुनन्दस्य स्यूते शतं नाणकानि प्राप्तानि । किन्तु विशालस्य स्यूते नवतिः एव नाणकानि आसन् ।

मन्त्री मन्दहासपूर्वकम् अवदत् - ''महाराज ! एषः विशालः एव कोषाध्यक्षपदे नियुक्तिम् अर्हति'' इति ।

एतत् श्रुत्वा असन्तुष्टः सुनन्दः कोपेन अवदत् - ''प्रभो ! नितराम् अन्याय्यम् एतत् । विशालस्य स्यूते नवतिः एव नाणकानि आसन् । तथापि सः एव कथं कोषाधिकारिपदे नियोक्ष्यते ?'' इति ।



तदा मन्त्री मन्दहासपूर्वकम् उक्तवान् - ''सुनन्द ! कोषाध्यक्षः बुद्धिमान् दक्षः च स्यात् यथा, तथैव निष्कपटः अपि स्यात् । भवतोः कृते अस्माभिः बुद्ध्या एव नवति-नाणकात्मकः एव धनस्यूतः दत्तः । किन्तु उक्तं यत् स्यूते शतं नाणकानि सन्ति इति । भवता अतिथिगृहे स्यूतस्य परीक्षा कृता । स्यूते नवतिः एव नाणकानि प्राप्तानि । भवता अस्माकं वचने विश्वासः कृतः । स्वस्य निष्कपटतां प्रमाणी-कर्तुं भवता स्वकोषस्थानि दश नाणकानि स्यूते स्थापितानि । विशालः तु अस्मासु पूर्णरूपेण विश्वासवान् आसीत् । अतः तेन स्यूतः न उद्घाटितः एव । विशाले यावन्तः गुणाः सन्ति तावन्तः भवति अपि सन्ति इति तु सत्यम् एव । किन्तु भवति न्यूनता नाम निष्कपटतायाः । अतः विशालः एव कोषाध्यक्षत्वेन चितः मया'' इति ।

एतत् श्रुत्वा सुनन्दः लज्जया शिरः अव-नमय्य ततः निर्गतवान् ।

कोषाध्यक्षपदं प्राप्तवान् विशालः स्वस्य कर्तव्यं सम्यक् एव निर्वहन् उत्तमरीत्या कार्यं च कुर्वन् प्रसिद्धिं प्राप्तवान् ।

एतत् दृष्ट्वा राजा मन्त्री च नितरां सन्तुष्टौ जातौ ।



# स्वप्नः उत वास्तविकता ?



काव्यश्रीभट्ट,
औरङ्गाबाद्

प्रिया त्रयोदशवर्षीया बालिका। सा बुद्धिमती बालिका। पुस्तक-पठने विशेषरुचिः तस्याः। विद्यालयस्य ग्रन्थालयात् बन्धुगृहात् वा पुस्तकानि आनीय पठति स्म सा।

यदा वार्षिकपरीक्षाः समाप्ताः तदा प्रिया नितरां सन्तुष्टा। विद्यालयतः उत्तमं कथा-पुस्तकम् आनीय पठनीयम् इति सङ्कल्पितवती सा। ग्रन्थालये उत्तमानि कथापुस्तकानि सन्ति बहूनि। किं चेतव्यम् इत्येव समस्या तस्याः। ग्रन्थालये पुस्तकस्य अन्वेषणावसरे तया आधानिकायाः कोणे एकं पुस्तकं दृष्टम्। तस्य मुखपुटादिकम् अपि सुन्दरम् एव। तत् स्वीकृत्य गृहम् आगता सा तस्य पठने उद्युक्ता जाता।

खाद्यानि खादन्ती पठति स्म सा। कथावस्तु आकर्षकम् एव आसीत्। पठनसमये एव पुस्तकस्थम् एकं चित्रं तस्याः नेत्रयोः पुरतः आगच्छत्।



क्षणानन्तरं नेत्रस्पन्दाभ्यन्तरे सा अन्यं लोकं गतवती आसीत्। तत्र सर्वत्र अन्धकारः। सा कष्टेन पदानि स्थापितवती। तत्रत्याः जनाः विलक्षणाः दृष्टाः तया। केचन खञ्जाः, पुनः केचन कुणयः। विकलाङ्गाः एव अधिकाः। तान् सर्वान् दृष्ट्वा प्रिया आश्चर्यचकिता जाता।

तां दृष्ट्वा कश्चन वृद्धः तस्याः समीपम् आगतः। सः स्वस्य पृष्ठभागे आम्लजनकवायुकोषं वहति स्म। तं दृष्ट्वा प्रिया ततः धावितुम् उद्युक्ता। किन्तु स्खलनात् पतिता सा जानुनि व्रणं प्राप्तवती। तत् दृष्ट्वा सः वृद्धः अवदत् – ''वत्से! अलं भीत्या। अहं भवत्याः साहाय्यं करिष्यामि। एतम् आम्ल-जनककोषं स्वीकरोतु'' इति।

'एषः मम साहाय्यं कर्तुम् एव आगतः'



बि. सल्लेशः, सिकन्दराबाद्

इति विचिन्त्य प्रिया स्वस्य कथां सङ्ग्रहेण तम् उक्त-वती ।

तदा सः वृद्धः अवदत् – ''प्रिये ! एतत् भवत्याः भावि जगत् । भवती २३तमं शतकं प्रविष्टवती अस्ति'' इति ।

''एवम् ! किमर्थम् अत्र सर्वं विलक्षणम् अस्ति ?'' – प्रिया कुतूहलेन पृष्टवती ।

''वयं मानवाः निसर्गस्य नियमान् न पालितवन्तः । स्वस्य लाभाय अस्माभिः वृक्षादयः कर्तिताः । उन्नतानि भवनानि निर्मितानि । निसर्गः बहुधा कलुषीकृतः अस्माभिः । प्रगतिव्याजेन वयं यन्त्रागाराणि अस्थापयाम । तेन परिसरमालिन्यं महता प्रमाणेन प्रवृत्तम् । तस्मात् ओझोन्-वलयः रन्ध्रयुक्तः जातः । स च वलयः एव अस्माकं पृथ्वीं रक्षति स्म । तस्य हानेः कारणतः अतिनीलकिरणाः सूर्यतः निर्गत्य मानवान् अन्य-जीविनः च अपीडयन्'' इति सर्वं विवृतवान् सः वृद्धः ।

''एतस्याः समस्यायाः कः परिहारः ?'' इति विषादमिश्रितेन स्वरेण तं वृद्धं पृष्टवती प्रिया ।

''न कोऽपि ! यतः विलम्बः जातः अस्ति । भवत्सदृशाः कदाचित् किमपि कर्तुं शक्नुयुः'' इति अवदत् सः वृद्धः ।

''किन्तु ...''

एतस्य वचनस्य समाप्तितः पूर्वम् एव कश्चन उच्चध्वनिः श्रुतः । कश्चित् ताम् आह्वयन् आसीत् ।

प्रिया झटिति उत्थितवती । तदा तया अवगतं यत् अहं शयिता आसम् इति । माता तां जागरयन्ती आसीत् ।

मुखं प्रक्षालयितुं गता सा स्वस्य जानु परिशीलितवती । तत्र व्रणः कश्चन दृष्टः ।



शय्यातः भूमौ पतनात् व्रणं प्राप्तवती आसीत् सा ।

मानवकुलस्य हिताय किं करणीयम् इति चिन्तनं पूर्वं तस्याः न आसीत् । इदानीं तु सा सम्यक् जानाति – विनाशदशां प्राप्तवतः जगतः रक्षणार्थं किं करणीयम् इति ।

# स्वप्ने ज्ञातः पाठः


पि. कार्तिकेयः, विजयवाडा

"भ्रातः ! तं मा ताडयतु । सः शुनकशावकः भवतः कां वा हानिम् अकरोत् ? विना कारणं किमर्थं तं पीडयति भवान् ?" इति अग्रजं राजारामम् अवदत् गोपालः ।

शुनकानां पीडनं, तान् उद्दिश्य पाषाणक्षेपणं च राजारामस्य प्रवृत्तिः । पतङ्गादीन् गृहीत्वा तेषां पक्षं रज्ज्वा बध्नाति स्म अपि सः ।

विद्यालयं प्रति अपि सः करवस्त्रेण आवृतान् पतङ्गादीन् आनयति स्म । तस्य सहपाठिनः तं वदन्ति स्म – 'तेषां पीडनं न करोतु रे' इति ।

गोपालः कदाचित् अग्रजस्य एतां दुष्प्रवृत्तिं मातरम् अवदत् । तदा माता कोपेन राजारामम् अतर्जयत् – "वत्स ! किमर्थं भवान् पतङ्गादीनां कीटानां विषये निर्दयव्यवहारं प्रदर्शयति ? यदि एषा एव प्रवृत्तिः भवतः अनुवर्तेत तर्हि भवान् दण्डितः भवेत्" इति ।



"अम्ब ! ते तु क्षुल्लकाः जन्तवः । ते मां कथं वा दण्डयितुम् अर्हेयुः ?" इति हसन् अपृच्छत् राजारामः ।

"ते न दण्डयेयुः । किन्तु भगवान् दण्डयेत्" इति उक्तवती माता ।

"हुम्, एषः अन्धविश्वासः !" इति उक्त्वा शयनार्थं स्वप्रकोष्ठं गतवान् राजारामः ।

अनन्तरदिने प्रातः यदा उत्थितं तदा आश्चर्यं नाम राजारामस्य हस्तौ एव न दृश्येते स्म ! उत्थातुम् अपि कष्टम् अनुभवन् सः शयानः एव मातरम् अवदत् – "अम्ब ! पश्यतु मम दुर्गतिम्" इति ।

"अग्रज ! भवतः हस्तौ एव न दृश्येते ! कुत्र गतौ तौ ?" – गोपालः



हरिणी
वेङ्कटरामन्, चेन्नै

अपृच्छत् ।

तदा राजारामस्य माता अवदत् – ''भवतः दौष्ट्यविषये मया बहुधा आक्षेपः कृतः । मम वचनं न श्रुतं भवता । अतः भगवता एतेन क्रमेण भवान् दण्डितः'' इति ।

गोपालस्य साहाय्येन राजारामः विद्यालयम् अगच्छत् । सहपाठिनः तस्य दुर्दशां दृष्ट्वा हसितवन्तः । केचन उपहासम् अपि कृतवन्तः । सः तु स्वस्य एकमपि कार्यं स्वयं कर्तुं न शक्नोति स्म । आत्मनः परावलम्बितां ज्ञात्वा सः नितरां दुःखितः जातः । गृहं प्रति आगमनसमये शुनकाः तम् अपीडयन् । महता कष्टेन तेभ्यः आत्मानं रक्षन् सः कथमपि गृहं प्राप्तवान् । पतङ्गाः तं परितः भ्रमन्तः पीडयन्ति स्म । तान् निवारयितुं न शक्नोति स्म सः ।

इदानीं राजारामः चिन्तयति – 'इतः परं मया जीविनः न पीडनीयाः । इतः पूर्वं मया बहवः जीविनः बहुधा पीडिताः । भगवतः नाम्ना अहं शपे – कमपि जीविनम् अहं न पीडयिष्यामि इति । मातरम् अपि मम सङ्कल्पं वदिष्यामि' इति ।

अनन्तरदिने प्रातः उत्थानसमये तेन स्वस्य हस्तौ स्वस्थाने एव दृष्टौ । सः उच्चैः अघोषयत् – ''अहो, मया हस्तौ प्रतिप्राप्तौ । हस्तौ प्रतिप्राप्तौ'' इति ।

''राजाराम ! उत्तिष्ठ ! उत्तिष्ठ रे राजाराम !'' इति वदन् कश्चित् तम् उत्थापयितुं प्रयतमानः आसीत् ।

राजारामः नेत्रे उन्मीलितवान् । गृहजनाः सर्वे तं परितः स्थितवन्तः आसन् ! 'अहो, मया यत् दृष्टं तत् सर्वं न वास्तविकम् । घटितं तु सर्वं स्वप्ने एव !' इति चिन्तयन् राजारामः दीर्घं निश्श्वसितवान् ।

सः स्वस्य स्वप्नं विस्तरेण मातरं निवेद्य अवदत् – ''अम्ब ! मया स्वप्नकारणतः कश्चन उत्तमः पाठः पठितः'' इति ।

पुत्रस्य एतत् वचनं श्रुत्वा तदीयौ मातापितरौ नितरां सन्तुष्टौ ।





# दृष्टिभेदः



तेजल् वि. विदागवे,
सतारा

धनराजश्रेष्ठी कश्चन महाधनिकः । तस्य पुत्रः गुणराजः । अन्वर्थनामा सः । ग्रामे जनाः कथं दारिद्र्यपूर्णं जीवनं यापयन्ति इति मम पुत्रः जानातु इति उद्देशेन धनराजश्रेष्ठी कदाचित् पुत्रेण सह कञ्चित् लघुग्रामं गतवान् । ग्रामे कस्यचित् निर्धनस्य गृहे सप्ताहं यावत् तौ वासं कृतवन्तौ ।

गृहं प्रत्यागतः धनराजश्रेष्ठी पुत्रम् अपृच्छत् - ''ग्रामजीवनं कथम् अभासत ?'' इति ।

''तत् तु नितराम् अपूर्वम्'' इति अवदत् गुणराजः ।

''जनाः तत्र दारिद्र्यजीवनं यापयन्ति इत्येतत् लक्षितं खलु भवता ?'' - पिता अपृच्छत् ।

''आम् । सर्वं दृष्टम्'' इति उक्तवान् गुणराजः ।

''एतस्मात् लघुप्रवासतः का नीतिः अवगता भवता ?'' इति पुत्रम् अपृच्छत् धनराजः ।

''अस्माकं गृहे शुनकः अस्ति, किन्तु तेषां





देवीप्रसन्न बेहरा, मयूरभञ्ज

गृहे शुनकाः भवन्ति । अस्माकं गृहस्य पुरतः उद्याने एकः लघुकासारः अस्ति, ते तु नदीतीरे एव निवसन्ति । वयम् उद्यान-शोभावर्धनाय कृत्रिम-दीपान् प्रवर्तयामः, तेषां गृहपरिसरः तु नक्षत्र-शोभया विराजते । वयं स्वस्य भूसम्पत्तेः सीमां निर्देष्टुं प्राकारं रचयामः, तेषां तु दिगन्तः एव सीमा । वयम् आधुनिके लघुप्रदेशे निवसामः, ते तु सुविशाले प्रदेशे निवसन्ति । अस्माकं साहाय्यार्थं बहवः सेवकाः भवन्ति, ते तु अन्येषां साहाय्यं कुर्वन्ति । वयम् अस्माकम् उदरपूरणाय धान्यानि क्रीणीमः, ते तु धान्यानि वर्धयन्ति अन्येषाम् उपयोगाय अपि । गृह-भित्तयः अस्मान् रक्षन्ति, तेषां तु बहवः सुहृदः, ये च परस्परक्षणे उपकुर्वन्ति । दुःख-विनिमयः अपि तैः क्रियते'' इति अवदत् गुणराजः ।

पुत्रस्य वचनं श्रुत्वा धनराजः नितरां स्तब्धः जातः । पुत्रस्य मुखात् एतादृशं ग्रामप्रशंसापरं वचनं सर्वथा न निरीक्षितवान् आसीत् सः ।

गुणराजः पुनः अवदत् - ''भवता मां तत्र नयता महान् उपकारः कृतः । तत्रत्यस्य सर्वस्य दर्शनात् मया अस्मद्गृहस्य दारिद्र्यम् अवगतम्'' इति ।

वयं यया दृष्ट्या लोकं पश्यामः तादृशः एव भासते सः । अस्माकं दृष्टिः एव जीवनं सुखमयं समृद्धं च कर्तुम् अर्हति । वयं धनेन यत्किमपि क्रेतुं शक्नुयाम, किन्तु मनसः शान्तिः तु धनेन क्रेतुं न शक्या एव ।

*शिक्षकः* - नेपोलियन् कदा जातः ?
*छात्रः* - स्वस्य जन्मदिने एव ।

**- आर्. नितेशराज् (१२) बेङ्गलूरु**





*प्रशान्तः* - विवेकः कक्ष्यायाः 'मानिटर्' कृतः इति किं भवान् जानाति ?
*राजारामः* - एवम् ? एवं तर्हि सि.पि.यु. कः ?

**- जी.एस्. अनूप् (१०) ओमन्**



# पर्वतशिखरे कूतूहलघटना



रोसलीना दास्, मयूरभञ्

आर्शिकः, अर्नाब, स्काटः, सहनाझः च मूकतां गताः सन्ति । अर्धघण्टा अतीता चेदपि कस्यापि मुखात् किमपि न निर्गतम् । सर्वे गाम्भीर्येण उपविष्टाः आसन् ।

ते बेरमूलपर्वतं प्रति गतवन्तः आसन् साहस-यात्रां निमित्तीकृत्य । तत्र किञ्चन यन्त्रागारं दृष्टम् आसीत् तैः । तत्र रक्षकत्वेन कश्चन शस्त्रधरः आसीत् । तत्परिसरे अटनात् तैः गोलकास्त्राणि, भुषुण्ड्यः, स्फोटकचूर्णानि च दृष्टानि । तावता 'कः तत्र ?' इति कश्चन ध्वनिः श्रुतः ! तं श्रुत्वा ते धावनम् आरब्धवन्तः ।

पर्वतमूले पटमण्डपे उपविश्य ते गभीर-चर्चाम् आरब्धवन्तः । अर्नाबः अवदत् - ''ते भयोत्पादकाः इत्यत्र नास्ति सन्देहः । अस्माभिः आरक्षकाः सूचनीयाः । भयोत्पादकानां क्रियाः





पुनीत जे.
*हिरेमठः,*
बेङ्गलूरु



प्रबुद्धाः दृश्यन्ते एषु दिनेषु । ते निगूह्य स्थित्वा कार्यकरणाय निर्जनं बेरमुलपर्वतम् आश्रितवन्तः स्युः'' इति ।

तदा आर्शिकः अवदत् – ''एवं स्यादपि । तथापि अस्माभिः अधिकं विवरणं सङ्ग्रहणीयम् । तेषां भयोत्पादकत्वं यदा दृढीकृतं भवति तदा एव आरक्षकाः सूचनीयाः । ते के इति स्पष्टतया ज्ञातुं कश्चन उपायः मया चिन्तितः अस्ति । रात्रौ स्काटः सहनाझः अहं च तत् यन्त्रागारस्थलं प्रति गमिष्यामः । अर्नाबः पर्वतमूले एव तिष्ठतु । यदि अस्माकं कोऽपि अपायः भविष्यति तर्हि वयं रक्तकरवस्त्रं दर्शयिष्यामः । तदा अर्नाबः अविलम्बेन आरक्षकान् एतां वार्तां वदेत्'' इति ।

अर्नाबः एकाकितया स्थितिम् आदौ न अङ्गीकृतवान्, तथापि सर्वे यदा अनुरोधं कृतवन्तः तदा सः तत् अनुमतवान् ।

अन्धकारप्रसारः यदा आरब्धः तदा आर्शिकः आदौ प्रस्थितवान् । स्काटः सहनाझः च तम् अनुसृतवन्तौ । ते प्राकारभित्तिम् आरुह्य अन्तः गतवन्तः । तत्र विशालः प्रदेशः दृष्टः । तत् दृष्ट्वा आर्शिकः मन्दस्वरेण अवदत् – 'एतत् हेलिकाप्टर्स्थानकम् इति भाति' इति । यदा ते



अग्रे गन्तुम् उद्युक्ताः तदा रक्षकभटैः तेषाम् आगमनं ज्ञातम् । ते एतान् ग्रहीतुम् आगताः । एते गुल्मानां पृष्ठतः निलीय स्थितवन्तः ।

रक्षकभटाः यदा दूरं गताः तदा एते विना शब्दं पदं स्थापयन्तः ततः निर्गताः ।

ततः ते सर्वे समीपस्थम् आरक्षकालयं गत्वा आरक्षकप्रमुखम् अवदन् - ''अस्माभिः भयोत्पादकानां गणः दृष्टः अस्ति'' इति ।

रात्रौ बालानाम् आगमनं दृष्ट्वा एव सः आरक्षकप्रमुखः आश्चर्यचकितः आसीत् । इदानीं तेषां वचनं श्रुतवतः तु तस्य आश्चर्यं प्रवृद्धम् । सः कुतूहलेन अपृच्छत् - ''कुत्र सन्ति ते ? कुत्र भवद्भिः ते दृष्टाः ?'' इति ।

तदा आर्शिकः अवदत् - ''ते बेरमूलपर्वते यन्त्रागारं स्थापितवन्तः सन्ति'' इति ।

एतत् श्रुत्वा सः आरक्षकप्रमुखः उच्चैः अहसत् । एतत् दृष्ट्वा किञ्चिदिव भीतः अर्नाबः अन्यान् अवदत् मन्दस्वरेण - ''एषः आरक्षकनिरीक्षकः अपि भयोत्पादकगणीयः एव स्यात् इति भाति । वयम् अन्यत्र गच्छाम'' इति ।

तावता आरक्षकनिरीक्षकः अवदत् - ''तत्रत्याः न भयोत्पादकाः । सर्वकारेण गते वर्षे तत्र शस्त्रनिर्माणागारं स्थापितम् । एतत् सामान्यैः जनैः न ज्ञायते'' इति ।

एतत् श्रुत्वा ते बालाः उच्चैः हसितवन्तः । आरक्षकः तेषां धैर्यं प्रशंसन् अवदत् - ''बालाः सन्तः अपि भवन्तः महत् एव साहसं कृतवन्तः सन्ति । धीराः भवन्तः'' इति ।

ततः प्रतिगमनसमये स्काटः अवदत् - ''अस्माकं जीवने अविस्मरणीया घटना एषा'' इति ।

अन्ये अपि एतत् अङ्गीकुर्वन्तः हसितवन्तः ।

*जान्* - मम सहपाठिभिः अध्यापकेन वा यत् कर्तुं न शक्यते तादृशं कार्यम् अहं कर्तुं शक्नोमि ।
*जेर्री* - किं तत् विशिष्टं कार्यम् ?
*जान्* - आत्मना लिखितस्य पठनम् ।

**- जि. आर्. वेङ्कटेशः,**
**जग्गय्यपेट्**





*यात्रिकः* - (रैल्वेस्थानकं प्रति गमनस्य मार्गे) भवतः क्षेत्रम् अतिक्रम्य गतं चेत् किं मया त्रिवादनीयं रैल्यानं प्राप्तुं शक्येत ?
*कृषिकः* - निश्चयेन । यदि मम शुनकः भवन्तं पश्येत् तर्हि भवान् ततोऽपि पूर्वतनम् अपि यानं प्राप्तुं शक्नुयात् ।



# रत्नशेखरेण सङ्केतिताः अर्थाः

रत्नशेखरः प्रशान्तनगरस्य शासकस्य गुरुः । तस्य विषये महती श्रद्धा महाराजस्य । रत्नशेखरस्य गुरुकुले बहवः छात्राः शिक्षणं प्राप्नुवन्ति स्म । ये तस्य गुरुकुले सम्यक् पठन्ति तेभ्यः उचितस्य उद्योगस्य दानाय सः तान् राजास्थानं प्रति प्रेषयति स्म । राजा गुरोः आदेशं श्रद्धया पालयन् तादृशेभ्यः उद्योगं ददाति स्म ।

अथ कदाचित् गुरुकुले विद्याभ्यासं समापितवतः पञ्च विद्यार्थिनः राज्ञः आस्थानं प्रति प्रेषितवान् गुरुः रत्नशेखरः । तेषु प्रथमाय पादरक्षां, द्वितीयाय वेत्रदण्डं, तृतीयाय चालनीं, चतुर्थाय सम्मार्जनीं च दत्तवान् आसीत् सः ।

पञ्चमस्य शिरः मुण्डयित्वा प्रेषितम् आसीत् तेन ।

यदा ते राजास्थानं प्राप्तवन्तः तदवसरे राजा तत्र न आसीत् । प्रतिवेशिराजस्य निमन्त्रणं पुरस्कृत्य तदीयं राज्यं गतवान् आसीत् सः । अतः युवराजः एव समग्रं शासनकार्यं निर्वहति स्म । मन्त्री काले काले यथायोग्यं मार्गदर्शनं करोति स्म ।

रत्नशेखरेण प्रेषिताः ते पञ्च अपि राजसभां प्रविश्य युवराजं विनयेन नमस्कृतवन्तः । ततः एकैकः अपि आत्मना आनीतं वस्तु युवराजाय प्रदर्शितवान् ।

युवराजः जानाति स्म एव यत् रत्नशेखरस्य गुरुकुले शिक्षणं प्राप्तवन्तः एते पञ्च अपि समर्थाः एव भवन्ति इति । किन्तु कः कस्मिन् उद्योगे नियोजनीयः इति तेन न ज्ञातम् । तैः आनीतानां वस्तूनां तात्पर्यं तु सर्वथा न अवगतम् । अतः सः तेषां नियोजनस्य दायित्वं मन्त्रिणे समर्पितवान् ।

मन्त्री तान् व्यवहारज्ञानसम्बद्धान् कांश्चन प्रश्नान् आदौ पृष्टवान् । ततः पादरक्षाम् आनीतवन्तं कोषाधिकारिपदे, वेत्रम् आनीतवन्तं कर्मचारिणां प्रशिक्षणाधिकारिपदे, चालनीम् आनीतवन्तं सुरक्षाधिकारिपदे, सम्मार्जनीम्



आनीतवन्तं सेनाधिकारिपदे च नियुक्तवान् । शिरोमुण्डनं प्राप्य आगतवन्तं स्नातकम् उपमन्त्रिपदे नियुक्तवान् सः ।

एतस्याः नियुक्तेः आधारः कः इति न अवगतवान् युवराजः । एकं तु स्पष्टम् आसीत् यत् तैः स्नातकैः आनीतानि वस्तूनि आधारीकृत्य एव मन्त्री तान् तत्तत्पदे नियुक्तवान् इति । किन्तु किं वस्तु कस्य योग्यताम् अज्ञापयत् इति न ज्ञातं तेन ।

अतः सः मन्त्रिणं विनयेन अपृच्छत् - ''मन्त्रिवर्य ! स्नातकैः यानि वस्तूनि आनीतानि तानि तेषां योग्यतां ज्ञापयति स्म इति तु स्फुटम् । किन्तु नियुक्तिसमये सा योग्यता भवता कथं ज्ञाता ? बहुधा चिन्तनेन अपि मया एतस्य रहस्यं सर्वथा न ज्ञातम् । अतः कृपया सर्वं विव्रियताम्'' इति ।

तदा मन्त्री मन्दहासपूर्वकम् अवदत् - ''युवराज ! प्रथमः शिष्यः पादरक्षाम् आनीतवान् आसीत् । पादरक्षा जनानां पादनिपीडनम् अपि मौनेन सहते । कदाचिदपि कस्यचिदपि विरोधं न करोति सा । अतः सा विनयस्य विश्वासस्य च प्रतीकम् । विनीतः विश्वासार्हः च कोषाधिकारिपदे अस्ति चेदेव वरं खलु ? अतः मया सः तस्मिन् पदे नियुक्तः'' इति अवदत् मन्त्री ।

प्रथमस्य नियुक्तेः रहस्यं ज्ञात्वा युवराजः 'मया अवगतम्' इति भावं शिरश्चालनपूर्वकं सूचितवान् ।

मन्त्री पुनः कथनम् अनुवर्तितवान् - ''द्वितीयः शिष्यः वेत्रम् आनीतवान् । वेत्रम्

अनुशासनस्य प्रतीकम् । आचार्यस्य आशयः यत् एषः कर्मचारिणां प्रशिक्षणे समर्थः इति । अतः मया सः तस्मिन् पदे नियुक्तः । तृतीयेन चालनी आनीता आसीत् । चालनी उत्तमानां वस्तूनां गमनम् अनुमन्यते, अनुत्तमानि च वस्तूनि आत्मनि एव धरति । आचार्यस्य आशयः अस्ति यत् एषः सज्जनानाम् आदरं करिष्यति, दुष्टान् च ग्रहीष्यति इति । अतः मया तस्मै स्नातकाय सुरक्षाविभागे उद्योगः दत्तः'' इति ।

तदा युवराजः पृष्टवान् - ''मन्त्रिवर्य ! सम्मार्जनी कीदृशम् अर्थं सङ्केतयति स्म ?'' इति ।

तत् श्रुत्वा मन्त्री अवदत् - ''सम्मर्जन्याः कार्यं किम् ? बाह्यप्रदेशतः आगतान् अवकरादीन् निवार्य गृहस्य स्वच्छतां रक्षति खलु सा ? तां तृतीयाय शिष्याय दत्तवान् आसीत् गुरुः । एतस्य तात्पर्यं यत् अन्यराज्यतः शत्रुसैनिकाः यदि अस्मद्देशं कदाचित् प्रविशेयुः तर्हि तान् एषः समर्थतया निवारयिष्यति इति । अतः एव अहम् एतं सेनाविभागे नियुक्तवान्'' इति ।

''मन्त्रिवर्य ! महती बुद्धिमत्ता भवतः । रत्नशेखरवर्येण येषां वस्तूनां दानेन यत् सामर्थ्यं सङ्केतितं तत् सम्यक् एव अवगतं भवता । अन्तिमस्य शिरसः मुण्डनं किमर्थं कारितम् आचार्येण ? उपमन्त्रिपदे तस्य नियुक्तेः रहस्यं च किम् ?'' इति कुतूहलेन अपृच्छत् युवराजः ।

''एतद्विषये मया अपि आदौ आश्चर्यम् एव प्राप्तम् आसीत् । किन्तु किञ्चित्कालं यावत् चिन्तनेन गुरोः आशयः मया अवगतः । शिरसः अन्तः मस्तिष्कं, तस्य अन्तः बुद्धिमत्ता च भवति । एवं शिरः बुद्धिमत्तायाः सङ्केतः । तत् शिरः एव मुण्डनेन स्पष्टतया दर्शयन् गुरुवर्यः ज्ञापितवान् यत् एतस्य बुद्धिमत्ता अधिका अस्ति इति । यस्य बुद्धिमत्ता अधिका सः एव खलु मन्त्री भवितुम् अर्हति ? अतः एव मया एषः उपमन्त्रिपदे नियुक्तः'' इति विवृतवान् मन्त्री ।

मन्त्रिणः एतत् विवरणं श्रुतवतः युवराजस्य सर्वे सन्देहाः समूलम् अपगताः आसन् । अतः सः प्रधानमन्त्रिणः विवेकं बहुधा प्रशंसितवान् ।





# मुद्रात्मकः ग्रन्थिः

ब्रह्मदत्तः यदा काशीराज्यं पालयति स्म तदा बोधिसत्त्वः कस्यचित् धनिकस्य कृषिकस्य गृहे जन्म प्राप्तवान् आसीत् । यथा यथा सः प्रवृद्धः तथा तथा तस्य कुटुम्बस्य सम्पत्तिः अपि प्रवृद्धा । बोधिसत्त्वस्य कश्चन अनुजः अपि आसीत् ।

धनिकः कृषिकः यदा दिवं गतः तदा कृषिकेभ्यः धनादीनां सङ्ग्रहस्य दायित्वं ताभ्यां सोदराभ्याम् एव निर्वोढव्यम् अभवत् ।

अथ कदाचित् करसङ्ग्रहाय तौ पार्श्वग्रामं गतवन्तौ । कृषिकाः देयानि धान्यानि, सहस्रं मुद्राः च दत्तवन्तः । तत् धनं धान्यानि च स्वीकृत्य तौ सहोदरौ काशीं प्रति प्रस्थित-वन्तौ ।

मार्गे काचित् नदी प्राप्ता । नाविकस्य आगमने विलम्बः आसीत् । अतः तौ सहोदरौ आत्मना आनीतं पाथेयग्रन्थिम् उद्घाट्य भोजनं कृतवन्तौ ।

बोधिसत्त्वः स्वकीयायाः प्रवृत्तेः अनुगुणं भोजनस्य कञ्चन भागं नद्यै समर्पितवान् ।

स च आहारभागः तस्यां नद्यां निवसता जलभूतेन प्राप्तः । तस्य सेवनेन सः जलभूतः दिव्यशक्तिशाली जातः । एतस्मात् सः अव-गतवान् यत् आहारं नद्यै समर्पितवान् जनः कश्चन महात्मा एव इति ।

भोजनस्य समाप्तेः अनन्तरं बोधिसत्त्वः स्वस्य वस्त्रं नदीतीरे सिकतानाम् उपरि प्रसार्य शयनं कृतवान् । तस्य अनुजः ईर्ष्यालुः आसीत् । सः अचिन्तयत् यत् अग्रजस्य भागः अपि मया एव वशीकरणीयः इति । अतः सः धनग्रन्थिसदृशम् एव ग्रन्थिं सज्जीकृत्य तस्य अन्तः बहून् शिलाखण्डान् स्थापित-वान् । तदुभयम् अपि स्वस्य वस्त्रस्य अन्तः गोपितवान् सः ।

किञ्चिदनन्तरं नाविकः आगतवान् । बोधि-सत्त्वः निद्रां समाप्य उत्थितवान् । । उभौ अपि नौकाम् आरूढवन्तौ । यदा नौका नद्याः मध्यभागम् आगता तदा अनुजः उपायेन

शिलाखण्डग्रन्थिं नद्यां पातितवान् । ततः सः कृत्रिमं खेदम् अभिनयन् उच्चैः आक्रन्दनं कृतवान् - ''सहोदर ! हन्त ! धनग्रन्थिः प्रमादवशात् नद्यां पतितः'' इति ।

तदा अनुजं सान्त्वयन् बोधिसत्त्वः अवदत् - ''अनुज ! सा सम्पत्तिः प्रायः अस्माकं न आसीत् । अतः सा नद्यां पतिता । प्रवृत्तस्य विषये अधिकचिन्तया न किमपि प्रयोजनम् । अलं विषादेन'' इति ।

बोधिसत्त्वेन नद्यै अर्पितम् आहारं सेवितवान् जलभूतः दिव्यशक्तेः कारणतः नद्यां जातं धनग्रन्थेः पतनं झटिति ज्ञातवान् । अनुजस्य दुष्टचिन्तनम् अपि अवगतं तेन । सः झटिति कञ्चित् महामीनम् आज्ञापितवान् - 'वेगेन गत्वा तं धनग्रन्थिं गिलतु' इति । महामीनः तथैव अकरोत् । सः महामीनः कुत्रापि पलायनं यथा न कुर्यात् तथा तदुपरि विशेषदृष्टिं स्थापितवान् आसीत् जलभूतः ।

बोधिसत्त्वः तदनुजः च काशीं प्रत्यागतवन्तौ । गृहं गतः अनुजः प्रकोष्ठे उपविश्य ग्रन्थिम् उद्घाटितवान् । तत्र शिलाखण्डाः दृष्टाः तेन । तदा सः आत्मना कृतं दोषं ज्ञातवान् । सः नद्यां धनग्रन्थिम् एव पातितवान् आसीत्, न तु शिलाखण्डग्रन्थिम् । प्रवृत्तं स्मरन् पश्चात्तापं खेदं चिन्तां च अनुभवन् सः शय्याम् आश्रितवान् ।

कदाचित् केचन धीवराः मीनग्रहणाय नद्यां जालं प्रसारितवन्तः । तदा जलभूतः उपायेन तं महामीनम् अपि तस्मिन् जाले अपातयत् । तं गृहीत्वा धीवराः तस्य विक्रयणाय विपणिं गतवन्तः । जनैः यदा मूल्यं पृष्टं तदा ते धीवराः



उक्तवन्तः - ''एतस्य मत्स्यस्य मूल्यं सहस्रं सुवर्णमुद्राः'' इति ।

तत् अधिकं मूल्यं श्रुत्वा क्रेतारः हसन्तः अचिन्तयन् - 'एते धीवराः नितरां मूर्खाः' इति । तदनन्तरं धीवराः बोधिसत्त्वस्य गृहं गत्वा उक्तवन्तः - ''वयं मीनस्य विक्रयणाय अत्र आगताः'' इति ।

''एतस्य मत्स्यस्य किं मूल्यम् ?'' इति अपृच्छत् बोधिसत्त्वः ।

''भवते वयम् एकया मुद्रया एतं विक्रेतुम् इच्छामः'' इति अवदन् धीवराः ।

''भवतां वचनं विलक्षणम् इव भाति खलु ? 'भवते वयम् एकया मुद्रया एतं विक्रेतुम् इच्छामः' इति वदन्ति भवन्तः । एवं तर्हि अन्येभ्यः एषः केन मूल्येन विक्रेतुम् इष्यते भवद्भिः ?'' इति आश्चर्येण अपृच्छत् बोधिसत्त्वः ।

''अन्येभ्यः तु वयं सहस्रं सुवर्णमुद्राः प्राप्तुम् इच्छामः'' इति अवदन् धीवराः ।

बोधिसत्त्वः आश्चर्यम् अनुभवन् एकां सुवर्णमुद्रां दत्त्वा तं मीनं क्रीतवान् ।

बोधिसत्त्वः तत्पत्नी च यदा तं मीनं कर्तितवन्तौ तदा तस्य मीनस्य उदरे सहस्रसुवर्णमुद्रात्मकः धनग्रन्थिः प्राप्तः । 'एषः ग्रन्थिः ममैव' इति अवगतवान् बोधिसत्त्वः दर्शनमात्रेणैव ।

''एषः धनग्रन्थिः अस्माकम् एव'' इति पत्नीम् उक्त्वा बोधिसत्त्वः पूर्वं नदीतीरे प्रवृत्तं सर्वं तां निवेदितवान् ।

ततः सः पत्नीं पुनरपि अवदत् - ''एते धीवराः दिव्यज्ञानवन्तः इति भाति । ते जानन्ति स्म यत् मत्स्यस्य उदरे धनग्रन्थिः अस्ति इति । अतः तस्य तावत् मूल्यं वदन्ति स्म ते । स च ग्रन्थिः ममैव इत्यपि ते जानन्ति स्म । अतः एकया एव मुद्रया मीनं मह्यं विक्रेतुम् ऐच्छन् ते । या एका मुद्रा तैः प्रार्थिता सा तेषां पारिश्रमिकम् आसीत् प्रायः'' इति ।

'एतेषु धीवरेषु दिव्यज्ञानं कथं वा भवितुम् अर्हति ?' इति चिन्तयन् महत् आश्चर्यम् अनुभूतवान् बोधिसत्त्वः ।

तदा काचित् अशरीरवाणी तेन श्रुता - ''महानुभाव ! अहं नद्यां निवसन् कश्चन जलभूतः अस्मि । कदाचित् भवान् नद्यै खाद्यपदार्थान् अर्पितवान् । ते मया सेविताः । तस्मात् मया दिव्यशक्तिः सम्प्राप्ता । नद्यां पतन् धनग्रन्थिः मया दिव्यशक्त्या दृष्टः । अहं कञ्चित् महामीनं तस्य गिलनाय प्रेरितवान् । सः मीनः धीवरैः गृहीतः । तान् बोधयित्वा अहं भवत्समीपं प्रेषितवान् । एवं मया भवतः ऋणात् मुक्तिः प्राप्ता । भवतः अनुजः तु महादुष्टः । सः भवन्तं वञ्चयितुं प्रयत्नं कृतवान् । अतः तस्मै एतस्य धनराशेः न कोऽपि भागः सर्वथा दातव्यः भवता'' इति ।

जलभूतस्य उपकारं ज्ञात्वा तस्य सद्व्यवहारं च स्मृत्वा बोधिसत्त्वः महान्तं सन्तोषम् अनुभूतवान् ।

किन्तु अनुजस्य विषये जलभूतेन यत् उक्तं तत् न पालितवान् सः । भ्रातृन्यायस्य अनुगुणम् अनुजाय पञ्चशतं मुद्राः यच्छन् सः अनुपमं भ्रातृप्रेम प्रकटितवान् ।





# विष्णुपुराणम्

श्री लक्ष्मीः वेदवतीरूपेण जन्म प्राप्य यदा तपस्यां कुर्वती आसीत् तदा रावणः तस्याः केशपाशं गृहीतवान् । रावणस्य स्पर्शतः अपवित्रतां प्राप्तवती सा स्वस्य शरीरं योगाग्नौ पातयित्वा भस्मीकृतवती, ततः लङ्कायां नूतनं जन्म प्राप्तवती च ।

लङ्कायाः प्रासादस्य समीपे एकः सरोवरः आसीत् । रावणः प्रतिदिनं तत्र स्नात्वा शिवपूजायै ततः कमलानि नयति स्म । कदाचित् तेन तत्र प्रकाशमानं किञ्चन कमलं दृष्टम् । तत् सुविशालम् आसीत् । तस्य मध्ये तेन नवजातः स्त्रीशिशुः कश्चन दृष्टः ।

अनन्तरक्षणे अशरीरवाणी काचित् श्रुता – 'हे रावण ! एषा बालिका भवतः जीवनस्य लङ्कायाश्च धूमकेतुः इव अस्ति'' इति ।

एतत् श्रुतवान् रावणः झटिति आज्ञां कृतवान् यत् तस्य स्त्रीशिशोः वधः करणीयः अविलम्बेन इति । किन्तु महता प्रयासेन अपि राक्षसाः तस्य शिशोः मारणं कर्तुं न शक्ताः । यदा तस्य छेदाय ते खड्गम् उन्नीतवन्तः तदा तेषां हस्ततः खड्गः एव अदृश्यतां गतः ।

यदा ते तं शिशुम् अग्नौ पातयितुम् उद्युक्ताः तदा अग्निः एव शीतलतां गतः । तदुपरि ते शिलां पातयितुं प्रयासं कृतवन्तः । तदा शिला पुष्परूपेण परिणता । हिंस्रपशूनां पुरतः यदा सः शिशुः स्थापितः तदा ते हिंस्रपशवः ततः पलायितवन्तः । शिशोः मारणाय अन्यं कमपि मार्गम् अपश्यन्तः ते राक्षसाः तं शिशुं पञ्चलोहात्मिकायां पेटिकायां स्थापयित्वा तां च पेटिकां कीलयित्वा समुद्रे क्षिप्तवन्तः ।

सा पेटिका समुद्रम् अतिक्रम्य भूमिं विदारयन्ती बहुदूरं गता । मिथिलायाः राजा जनकः



महाज्ञानी राजर्षिः च । सः कदाचित् यज्ञाय भूमिं समतलां कुर्वन् आसीत् । तस्मिन् समये हलाग्रं केनचित् वस्तुना घट्टितं जातम् । ततः 'ठन्' इति ध्वनिः उत्पन्नः । आश्चर्यं प्राप्तवान् राजा तत्र खननं कृतवान् । तत्र तेन सा पेटिका प्राप्ता । तस्याः अन्तः स्थितः स्त्रीशिशुः अपि प्राप्तः । 'एषा कन्या भूमिदेव्या दत्ता' इति चिन्तयन् राजा जनकः तां प्रीत्या उन्नीतवान् ।

हलेन कर्षणावसरे या रेखा सम्पद्यते सा उच्यते - 'सीता' इति । एषः स्त्रीशिशुः सीतायां प्राप्तः इत्यतः तस्याः नाम 'सीता' इत्येव निश्चितम् । जनकस्य पुत्री सा 'जानकी' इत्यपि नाम प्राप्तवती ।

कदाचित् सीता सखीभिः सह कन्दुकेन क्रीडन्ती आसीत् । तदा कन्दुकं शिवधनुषः अधः गतम् । कन्दुकस्य अन्वेषणाय आगता सीता शिवधनुषः अधः स्थितं कन्दुकं स्वीकृतवती । ततः तत् धनुः उन्नीय क्रीडनकम् इव उपयुञ्जाना क्रीडितवती च । महत् शिवधनुः अपि क्रीडनकम् इव उपयुञ्जानां पुत्रीं दृष्ट्वा जनकः नितराम् आश्चर्यचकितः ।

राज्ञः जनकस्य पूर्वजैः तत् धनुः प्राप्तम् आसीत् । परम्परया तस्य पूजा प्रचलति स्म अपि । त्रिपुरासुरसंहारावसरे शिवः तस्यैव धनुषः उपयोगं कृतवान् आसीत् । त्रिशतं बलशालिनः जनाः सम्भूय युगपत् प्रयासं कृत्वा तत् धनुः उन्नयन्ति स्म ।

'तादृशं शिवधनुः लीलया उन्नीतवती एषा सीता सामान्या न' इति अवगतवान् जनकः । 'एतत् धनुः उन्नेतुं सामर्थ्यं यस्य भवति सः एव एतस्याः पतिः भवितुम् अर्हति' इति निर्णीय सः सङ्कल्पितवान् यत् एतस्याः स्वयंवरावसरे एतस्य धनुषः उन्नयनम् एव पणः भवेत् इति ।

स्वस्य यज्ञस्य रक्षणाय विश्वामित्रः दशरथं सानुरोधम् उक्तवान् यत् रामलक्ष्मणौ मया सह प्रेषणीयौ इति । एतत् श्रुत्वा दशरथः अवदत् - ''महर्षिवर्य ! मम पुत्रौ कोमलकायौ । तयोः धनुर्विद्याभ्यासः इतोऽपि न समाप्तः । अतः तौ राक्षसेभ्यः भवतः यज्ञस्य रक्षणाय सर्वथा असमर्थौ'' इति ।

तदा विश्वामित्रः दशरथम् अवदत् - ''तयोः धनुर्विद्याभ्यासः न समाप्तः इत्यतः एव अहम् अत्र आगतः अस्मि । राजकुमारैः यत् धनुर्विद्यानैपुण्यं प्राप्तव्यं तत् एतौ अहं बोधयिष्यामि । अतः अलं चिन्तया'' इति ।

वसिष्ठः मन्दहासं प्रकटयन् विश्वामित्रं प्रशंसन् अवदत् - '' राजन् ! विश्वामित्रः यत्

वदति तत् जनहिताय एव । अतः भवान् तेन सह तौ प्रेषयतु निश्चिन्ततया'' इति ।

वसिष्ठस्य आदेशं पालयन् राजा दशरथः कष्टेन एव पुत्रौ विश्वामित्रेण सह प्रेषितवान् । रामलक्ष्मणौ मुनिवेषं धृत्वा धनुर्बाणादिकं गृहीत्वा विश्वामित्रेण सह सिद्धाश्रमं गतवन्तौ । विश्वामित्रस्य मार्गदर्शनं प्राप्नुवन्तौ तौ विभिन्नेषु धनुर्विद्याकौशलेषु पारङ्गतौ जातौ ।

यदा विश्वामित्रः यज्ञसन्नाहं कुर्वन् आसीत् तदा ताटका नाम राक्षसी हठात् आक्रमणं कृतवती । 'तस्याः वधं करोतु' इति रामम् आदिष्टवान् विश्वामित्रः । गुरोः आज्ञां प्राप्य रामः ताटकां लक्ष्यीकृत्य बाणवर्षणं कृतवान् । बाणप्रहारं प्राप्य ताटका घोरं क्रन्दनं कुर्वती भूमौ पतितवती, अल्पे एव काले प्राणैः वियुक्ता जाता च ।



विश्वामित्रः रामस्य बाणप्रयोगकौशलं बहुधा श्लाघितवान् । यज्ञः प्रारब्धः । विश्वामित्रः अस्त्रशस्त्रसम्बन्धिनः कांश्चन अंशान् उपदिश्य रामलक्ष्मणौ यज्ञरक्षणकार्ये नियुक्तवान् । यज्ञारम्भानन्तरं मारीचः सुबाहुः च यज्ञशालायाः उपरि अभिपतितवन्तौ । रामः स्वस्य बाणैः सुबाहुं मारितवान् । मारीचः व्रणितः सन् ततः पलाय्य समुद्रे न्यपतत् । कथञ्चित् तरन् सः कष्टेन लङ्कां प्राप्तवान् ।

ततः यागविधिः विना विघ्नं प्रवृत्तः । पूर्णाहुतिसमये रामः हविः अर्पितवान् । अन्तिमायाः आहुतेः पतनस्य अनन्तरं यज्ञकुण्डे ज्वालानां मध्ये कश्चन दिव्यः बाणः प्रकटः जातः । तं बाणं रामाय दत्त्वा विश्वामित्रः उक्तवान् - ''राम ! एतत् दिव्यास्त्रं भवतः एव । एतत् भवन्नाम्ना एव ख्यातं भविष्यति । भवता प्रयुक्तम् एतत् शत्रुसंहारं कृत्वा पुनरपि भवत्समीपम् एव आगमिष्यति'' इति ।

रामः तं बाणं स्वीकृत्य नेत्राभ्यां स्पृष्ट्वा स्वस्य तूणीरे संस्थाप्य गुरोः विश्वामित्रस्य चरणौ भक्त्या अस्पृशत् ।

विश्वामित्रः रामम् आशीर्वादेन अनुगृह्णन् उक्तवान् - ''हे राम ! मया अस्त्रविद्यासम्बद्धं यद्यत् ज्ञायते तत्सर्वं भवन्तं बोधितवान् अस्मि । भवतः गुरुत्वं यत् मया प्राप्तं तत् महते सौभाग्याय इति अहं भावयामि । एतस्मात् मया या प्रसन्नता प्राप्ता ताम् अहं शब्दैः वर्णयितुं न शक्नोमि'' इति ।

तदा रामः विनयेन अवदत् - ''भवान् मां स्वकृपापात्रं भावितवान् यत् तत् मम परमं सौभाग्यम् । मां शिष्यत्वेन अङ्गीकृत्य ज्ञानदानं



यत् कृतं तस्मात् अहं धन्यः अस्मि'' इति ।

सिद्धाश्रमे वसन्तौ गुरोः सेवां कुर्वन्तौ रामः लक्ष्मणः च युवकौ जातौ । तयोः उपस्थितिः सिद्धाश्रमस्य शोभां विशेषतः वर्धितवती आसीत् । रामः कमलदलायताक्षः आसीत् । तस्य दृष्टिः चन्द्रिकासमा आसीत् ।

केषाञ्चित् दिनानाम् अनन्तरं विश्वामित्रः रामलक्ष्मणाभ्यां सह मिथिलां प्रति प्रस्थितवान् । मध्येमार्गं गौतममुनेः आश्रमसमीपे रामस्य चरणस्पर्शतः काचित् शिला नारीरूपं प्राप्तवती । सा एव अहल्या । गौतमस्य शापस्य कारणतः सा शिलात्वं गता आसीत् । मानवरूपं प्राप्य सा रामस्य चरणौ स्पृष्टवती ।

तस्मिन् एव समये गौतमः अपि स्वस्य दीर्घकालिकं तपः समाप्य प्रत्यागतः । सः रामं भक्तिपूर्वकं प्रणमन् अवदत् – ''भवतः चरणयोः स्पर्शात् मम पत्नी शापात् मुक्ता जाता । अतः स्पष्टं यत् भवान् परमप्रभोः अवतारः एव अस्ति इति'' इति ।

किन्तु रामः एतत् निराकुर्वन् गौतमम् अवदत् – ''शापस्य अवधेः समाप्तेः कारणतः अहल्या स्वयं शापात् मुक्ता जाता । अत्र मम महत्त्वं किमपि नास्ति'' इति ।

तदा गौतमः पुनः अवदत् – ''राम ! एतत् भवतः विनयवचनम् । भवान् विनीतः यथा तथैव महाप्रतापी परमशक्तिशाली च अस्ति'' इति । विश्वामित्रः अपि एतत् अङ्गीकुर्वन् शिरः चालितवान् ।

एतदनन्तरं गौतमः विश्वामित्रं रामलक्ष्मणौ च स्वस्य आश्रमे यथोचितं सत्कृतवान् । भोजनस्य अनन्तरं विश्वामित्रः रामलक्ष्मणाभ्यां सह स्वस्य प्रयाणम् अनुवर्तितवान् ।

राजा जनकः स्वस्य पुत्र्याः स्वयंवरे भागग्रहणाय सर्वान् ऋषिमुनीन् अपि निमन्त्रितवान् आसीत् । निमन्त्रणकार्यं निर्वहति स्म गौतमस्य पुत्रः शतानन्दः । सः विश्वामित्रस्य निमन्त्रणाय सिद्धाश्रमं प्रति गच्छन् आसीत् । मध्येमार्गं तयोः मेलनं जातम् ।

विश्वामित्रं दृष्ट्वा शतानन्दः झटिति एव शिबिकातः अवतीर्य चरणस्पर्शपुरस्सरं विश्वामित्रं नमस्कृत्य स्वयंवराय निमन्त्रितवान् । विश्वामित्रः अहल्यायाः शापविमोचनवार्तां श्रावितवान् । एतत् श्रुत्वा नितरां सन्तुष्टः शतानन्दः एतस्य कारणीभूतं रामं बहुधा प्रशंस्य कृतज्ञतां प्रकटीकृत्य मातापित्रोः दर्शनाय तयोः आश्रमं प्रति निर्गतवान् ।

केषाञ्चित् दिनानाम् अनन्तरं विश्वामित्रः

रामलक्ष्मणाभ्यां सह मिथिलां प्राप्तवान् ।

तदवसरे सीता ऊर्मिला च उद्याने विहारं कुर्वत्यौ आस्ताम् । तेनैव उद्यानमार्गेण रामलक्ष्मणौ गच्छन्तौ आस्ताम् । सीतायाः दृष्टिः रामचन्द्रे पतिता । रामोऽपि ताम् अपश्यत् । ऊर्मिलालक्ष्मणौ अपि परस्परं दृष्टवन्तौ ।

यदा स्वयंवरः आरब्धः तदा सर्वे राजानः एकैकशः आगत्य स्वशक्तेः परीक्षां कृतवन्तः । किन्तु कोऽपि वीरः तत् धनुः उन्नेतुम् अपि न शक्तवान् । अन्ते सर्वे सम्भूय तत् उन्नेतुं प्रयासं कृतवन्तः । तत्रापि ते असफलाः एव ।

एतत् दृष्ट्वा राजा जनकः नितरां चिन्ताक्रान्तः जातः । सः खेदेन रोषेण च उक्तवान् - ''एषा पृथिवी वीरशून्या जाता अस्ति इति यदि मया ज्ञातं स्यात् तर्हि सीतास्वयंवरे एतस्य शिवधनुषः उन्नयनं पणत्वेन न अकरिष्यम् एव'' इति ।

राज्ञः जनकस्य एतत् वचनं श्रुत्वा सर्वे राजानः लज्जिताः जाताः । लक्ष्मणः एतत् सोढुं न शक्तः । अतः सः अग्रे गत्वा जनकम् अवदत् यत् एवं वदता भवता रामस्य अपमाननं क्रियमाणम् अस्ति इति ।

ततः राज्ञः अनुरोधं, गुरोः विश्वामित्रस्य आदेशं च प्राप्य रामः उत्थाय मन्दं मन्दं शिवधनुषः समीपं गत्वा भक्त्या तत् धनुः नमस्कृतवान् । ततः गजः यथा इक्षुदण्डम् उन्नयति तथा तत् धनुः लीलया उन्नीतवान् सः । यदा सः धनुः उन्नीय ज्याम् आकृष्य बाणं योजयितुं प्रयासम् अकरोत् तदा तत् धनुः भग्नं जातम् ।

ये राजानः तत् धनुः उन्नेतुं न शक्तवन्तः आसन् ते खेदेन, असूयया, क्रोधेन च रामम् अपश्यन् । राजा जनकः वीरं सुन्दराकारं रामं वरत्वेन प्राप्य नितरां सन्तुष्टः आसीत् । पवित्रस्य शिवधनुषः भङ्गात् किञ्चिदिव भीतः अपि आसीत् सः ।

शिवधनुषः भङ्गं लीलया कृतवन्तं रामं सीता साभिमानं सानुरागं च दृष्टवती ।



धनुषः भङ्गात् उत्पन्नः ध्वनिः चतसृषु अपि दिक्षु प्रसृतः । दक्षिणमहासागरे महेन्द्रपर्वते तपसि लीनस्य परशुरामस्य ध्यानस्य भङ्गम् अपि अकरोत् सः ।

विष्णोः प्रतिरूपस्य गोलोकवासिनः श्रीकृष्णस्य वचनं तेन तदा स्मृतम् । विष्णुः रामावतारं प्राप्य जगति तिष्ठति, परशुरामावतारस्य मम अवधिः समाप्तः इति चिन्तितवान् सः, श्रीकृष्णतः प्राप्तं धनुः, विष्ण्वंशं च रामाय अर्पयितुं ततः निर्गतः ।

जनकपुरे धनुषः भङ्गस्य अनन्तरं सीता रामस्य कण्ठे वरमालां समर्प्य लज्जाम् अनुभवन्ती पितुः पार्श्वे स्थितवती ।

जनकः सीतारामयोः विवाहस्य निर्वर्तनाय दशरथम् आनेतुं दूतान् प्रेषितवान् । दूतमुखात् एतां वार्तां श्रुत्वा दशरथः नितरां सन्तुष्टः जातः ।

ततः सीतारामयोः ऊर्मिलालक्ष्मणयोः च विवाहः महता वैभवेन प्रवृत्तः । अनन्तरं राजा दशरथः जनकस्य अनुज्ञां प्राप्य पुत्राभ्यां वधूभ्यां च सह अयोध्यां प्रति प्रस्थितवान् । तदवसरे एव परशुरामः शिवधनुषः भङ्गं कृतवतः विषये महता क्रोधेन विचारणां करोति स्म । एतत् दृष्टवान् दशरथः नितरां भीतः सन् रथात् अवतीर्य रामेण कृतस्य अपराधस्य विषये क्षमां याचन् अवदत् यत् एतदर्थं मां दण्डयतु, न तु रामम् इति ।

तदा परशुरामः क्रोधेन रामम् उद्दिश्य - "भवान् शिवधनुषः भङ्गं कुर्वन् मम गुरोः अपमाननं कृतवान् अस्ति । किं भवान् मम धनुषि बाणं योजयितुं शक्नुयात् ?" इति पृच्छन् रामाय स्वस्य धनुः दत्तवान् ।

रामः धनुः गृहीतवान् । तत्समनन्तरम् एव परशुरामे स्थितः समग्रः विष्ण्वंशः रामे सङ्क्रान्तः जातः । रामः लीलया एव तस्मिन् धनुषि बाणं योजितवान् । तदा परशुरामः अवगतवान् यत् एषः रामः वस्तुतः अपि विष्णोः अवतारः एव, मम भूमिका समाप्ता अस्ति इति ।

परशुरामस्य क्रोधः शान्तः जातः । सः रामं क्षमाम् अयाचत, स्वस्य धनुः तस्मै दत्त्वा पुनरपि तपसे ततः निर्गतवान् च ।

रामः मातापितृभ्यां भ्रात्रादिभिः च सह हर्षोल्लासपुरस्सरम् अयोध्यां प्रत्यागतवान् ।





# ऋणात् मुक्तिः

कस्मिंश्चिन् ग्रामे कश्चन कृपणः आसीत् । तस्य नाम रङ्गनाथः इति । सः यद्यपि महाधनिकः एव, तथापि दरिद्रः इव जीवति स्म ।

तस्य पत्नी कदाचित् अस्वास्थ्येन मृता । गृहे अवशिष्टः पुत्रः एकः एव । सोऽपि मूर्खः । रङ्गनाथः पुत्रस्य पालनेऽपि कृपणतां कृतवान् इति कारणात् सः पुत्रः सर्वदा भोजन-विषयमेव चिन्तयन्, किञ्चित् धनं लब्धं चेदपि तेन खाद्यवस्तु क्रीत्वा खादति स्म ।

रङ्गनाथः इदानीं धनसङ्ग्रहार्थम् अन्यम् उपायं चिन्तितवान् । सः गृहस्य एकस्मिन् कोणे एकं गर्तं निर्माय तस्मिन् एकं घटं संस्थाप्य घटे धनं स्थापयितुं रन्ध्रमेकं कृतवान् । केनापि एतत् ज्ञातुम् अशक्यम् आसीत् । रङ्गनाथः प्रतिदिनं प्राप्ते धने किञ्चिदेव व्ययीकृत्य अवशिष्टं सर्वं धनं तस्मिन् रन्ध्रे स्थापयति स्म नियततया ।

पितुः एतत् कार्यं दृष्टवान् पुत्रः । किन्तु तेन न ज्ञातं यत् पिता किमर्थं भूमौ धनं स्थापयन् अस्ति इति ।

एकदा सः पितरं पृष्टवान् – "भोजनार्थं धान्यादिकस्य क्रयणम् अकुर्वन् किमर्थं धनं भूमौ क्षिपन् अस्ति भवान् ?" इति ।

रङ्गनाथः पुत्रं बोधितवान् – "भूमौ अस्माकं ऋणदाता कश्चन अस्ति । तस्मै मया बहुधनं दातव्यम् अस्ति । अहं तु दरिद्रः । अतः समग्रं धनम् एकवारमेव दातुम् असमर्थः सन् प्रतिदिनं किञ्चित् किञ्चित् प्रत्यर्पयामि" इति ।

पुत्रः पितुः वचने विश्वासं कृतवान् । पितुः कृपणतायाः कारणम् एतत् ऋणम् एव इति चिन्तितवान् सः ।

अतः सः पितरम् उक्तवान् – "पितः ! अन्यनिमित्तं वयं कष्टे स्मः । भवता तस्मै धनं न दातव्यम् । तेन धनेन पूर्णोदरं भोजनं करवाव" इति ।

स्वस्य पुत्रस्य वचांसि श्रुतवतः पितुः मनसि संशयः उत्पन्नः – 'एषः मम धनसङ्ग्रहणकार्ये

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



विध्मायते' इति । अतः पुत्रं भाययितुं सः उक्तवान् - ''पुत्र ! मह्यं यः ऋणं दत्तवान्, सः न सामान्यमनुष्यः, अपि तु महाक्रूरः । यदि एकं दिनं न धनं स्थाप्यते तर्हि सः आयुधानि गृहीत्वा आगमिष्यति मां मारयितुम् । तस्य दर्शनमेव प्राणहारकम्'' इति ।

रङ्गनाथस्य पुत्रस्य मनसि एतत् वाक्यं प्रविष्टम् । कदाचित् शैत्यकाले कश्चन संन्यासी रात्रिसमये रङ्गनाथगृहम् आगतः । द्वारं स्वयं नुदन् अन्तः आगत्य सः संन्यासी उक्तवान् - ''धार्मिक ! मह्यं किञ्चित् आहारं ददातु कृपया'' इति ।

अन्तः आगतं संन्यासिनं दृष्ट्वा कुपितः रङ्गनाथः उच्चैः उक्तवान् - ''भोः ! मम गृहं भवतः पित्रा निर्मिता धर्मशाला इति किं चिन्तितवान् भवान् ?'' इति ।

संन्यासी अनेन वचनेन आश्चर्यान्वितः सन् सविनयम् उक्तवान् - ''भोः, यदि भोजनं नास्ति तर्हि चिन्ता नास्ति । शयनं कर्तुं वा किञ्चित् स्थलं ददातु । यतः एषः अस्ति शैत्यकालः । बहिः बहु शैत्यमस्ति'' इति ।

रङ्गनाथः इतोऽपि कुपितः सन् - ''अरे, भवतः सेवां कर्तुम् अहं भवतः ऋणं स्वीकृतवान् तु नास्मि । अपगच्छतु इतः'' इति कथयन् तं गृहात् बहिः प्रेषितवान् ।

''अहं तु न ऋणदाता । किन्तु भवते ऋणं दत्तवान् तु कोऽपि अस्ति एव किल ? तन्निमित्तमेव भवान् भोजनमपि अकृत्वा धनसङ्ग्रहे निरतः अस्ति । आत्मना सम्पादितं धनम् अनुभोक्तुमपि भवतः भाग्यं नास्ति'' इति उक्तवान् सः संन्यासी ।

''भवादृशाः पापिनः यदि मम गृहम् आगच्छन्ति तर्हि तथैव भवेत् । अद्य बहिः शैत्ये रात्रिं यापयति चेत् एतत् ज्ञायते भवता'' इति उक्तवान् रङ्गनाथः ।

''कदाचित् भवतः अपि एतादृशी परिस्थितिः भवेत् । अहङ्कारी मा भवतु'' इति उक्तवान् स संन्यासी ।

''अये, प्रासादसदृशं गृहमस्ति मम । तादृशी परिस्थितिः किमर्थं भवेत् मम ? भवादृशानां निर्गतिकानामेव एतादृशी परिस्थितिः जायते'' इति वदन् रङ्गनाथः सशब्दं द्वारं पिहितवान् ।

कानिचन दिनानि गतानि । कदाचित् रङ्गनाथेन प्रवासार्थं गन्तव्यम् आपतितम् । सः पुत्रम् आहूय - ''पुत्र ! गृहरक्षणं भवता करणीयम् । रात्रौ तस्याः भूमेः उपरि मञ्चं

स्थापयित्वा तस्मिन् निद्रातु ! द्वित्रेषु दिनेषु अहं प्रत्यागमिष्यामि'' इति उक्तवान् ।



रङ्गनाथस्य पुत्रः स्वेन लब्धं धनं भूमौ क्षेप्तुं न इष्टवान् । अतः सः तेन धनेन खाद्य-वस्तूनि आनीय पूर्णोदरं भुक्तवान् । दिनद्वयं गतम् । तृतीये दिने मध्यरात्रे द्वारताडनशब्दः कश्चन श्रुतः । रङ्गनाथस्य पुत्रः उत्थाय द्वारम् उद्घाटितवान् । तदा त्रयः चोराः खड्गं हस्तेन गृहीत्वा गृहस्य अन्तः प्रविष्टाः ।

तेषां दर्शनेन रङ्गनाथस्य पुत्रः स्वपित्रा पूर्वम् उक्तं स्मृतवान् । एते ऋणदातारः एव स्युः इत्यपि सः चिन्तितवान् । 'मया दिनद्वयं भूमौ धनं न स्थापितम् इति कारणात् एते आगताः' इति चिन्तितवान् सः ।

अतः सः चोरान् उक्तवान् - ''भोः, ऋण-दातारः ! अहं क्षन्तव्यः भवद्भिः । यतः दिनद्वयं मम समीपे धनं न आसीत् । अतः एव मया भूमौ न स्थापितम् । यदि मम पिता गृहे अभविष्यत् तर्हि सः प्रतिदिनं किञ्चित् धनं भूमौ स्थापयेत् एव । सः तु अद्य गृहे नास्ति । श्वः अहम् अवश्यं रन्ध्रे धनं स्थापयिष्यामि'' इति ।

चोरैः एतस्य तात्पर्यं किमपि न अवगतम् । किन्तु एतावत् तु तैः अवगतं यत् प्रतिदिनं कुत्रापि धनं स्थाप्यमानम् अस्ति इति । अतः तेषु कश्चन पृष्टवान् - ''वदतु ! भवतः पिता कुत्र धनं स्थापयन् अस्ति ?'' इति ।

तदा रङ्गनाथस्य पुत्रः स्वेन सुप्तं मञ्चं निष्कास्य रहस्यरूपेण स्थापितं स्थलं प्रदर्शित-वान् । चोराः तत् स्थलम् अन्विष्य धनघटं प्राप्तवन्तः । सः घटः धनेन पूर्णः आसीत् । तं घटं स्वीकृत्य ते पलायितवन्तः ।

अनन्तरदिने रङ्गनाथः प्रत्यागतः । स्वेन स्थापितं धनघटम् अदृष्ट्वा भीतः सः 'मम घटः, मम धनम्' इति आक्रोशनं कर्तुम् आरब्धवान् ।

पितुः तादृशीं परिस्थितिं दृष्ट्वा पुत्रः उक्त-वान् - ''पितः ! किमर्थं दुःखम् अनु-भवति भवान् ? चोरैः अस्माकं धनं तु न नीतम्'' इति ।

''तर्हि भवता तत् धनम् अन्यत्र स्थापितं किम् ?'' इति पुत्रं पृष्टवान् रङ्गनाथः ।

''भवान् भीतः मा भवतु । तत् धनं तेषाम् आसीत् । अतः ते तत् नीतवन्तः, तावदेव'' इति पुत्रेण उक्तम् ।

एतत् वचनं श्रुत्वा रङ्गनाथः कोपेन पुत्रं ताडयन् पृष्टवान् - ''के आगताः ? मम धनं

तेषामिति भवान् कथं वदति ?'' इति ।

''पूर्वम् एकदा भवता एव उक्तं किल - ऋणदातारः सन्ति इति ? ते ऋणदातारः एव आगताः आसन्'' इति वदन् पुत्रः रङ्गनाथं प्रवृत्तं सर्वम् उक्तवान् ।

''तदा मम बुद्धिः नष्टा आसीत् । अतः एव तथा उक्तवान् अहम् । आगताः न ऋणदातारः, किन्तु चोराः एव । भवतः मूर्खता मां नाशितवती । अपरिचितः कोऽपि असमये आगत्य द्वारताडनं करोति चेत् अपि यः द्वारम् उद्घाटयति, सः मूर्खः एव'' इति रङ्गनाथः क्रोधेन उक्तवान् ।

पुत्रः मनसि एव स्वेन कृतस्य अपराधस्य फलरूपां हानिं ज्ञात्वा 'इतः परं एवं न करोमि' इति निश्चितवान् ।

ततः 'गृहे जातस्य चौर्यस्य विषयं न्यायाधिकारिणं वदिष्यामि' इति चिन्तितवान् रङ्गनाथः । किन्तु तथा कृतं चेत् मयि स्थितस्य धनस्य विषयं सर्वे जानीयुः इति मत्वा प्रतिदिनं रात्रौ चोराणाम् अन्वेषणे निरतः सः समीपस्थेषु ग्रामेषु अटितुम् आरब्धवान् ।

एकस्मिन् दिने एवमेव अटित्वा मध्यरात्रे गृहं प्रत्यागत्य सः द्वारं ताडितवान् । किन्तु कोऽपि द्वारं न उद्घाटितवान् । बहुवारं पुत्रः आहूतः । तथापि किमपि प्रयोजनं न अभवत् । पुत्रस्य मूर्खतां निन्दन् सः द्वारसमीपे एव उपविष्टः । आरात्रि शैत्येन कम्पमानः सः प्रातःकाले किञ्चित् निद्रायां लीनः ।

तस्मिन्नेव समये तेन मार्गेण आगतः संन्यासी रङ्गनाथम् उत्थाप्य पृष्टवान् - ''अरे, एतादृशं बृहत् गृहम् अस्ति चेदपि मार्गे किमर्थं सुप्तम् अस्ति भवता ?'' इति ।

''महोदय ! किं वदानि ? तद्दिने भवता उक्तं वचनम् एव शापरूपेण परिणतम् । मया अर्जितं धनं मयापि न भुक्तम्, अन्येभ्यः अपि न दत्तम् ! सर्वमपि धनं चोरैः अपहृतम्'' इति खेदेन उक्तं रङ्गनाथेन ।

''आगताः न चोराः । किन्तु ऋणदातारः एव । भवान् इदानीम् ऋणात् मुक्तः अस्ति । अतः सन्तोषम् अनुभवतु'' इति उक्त्वा सः संन्यासी ततः गतवान् ।

ततः आरभ्य रङ्गनाथे महत् परिवर्तनं जातम् । स्वयं पूर्णोदरं खादन् अन्येभ्यः अपि ददत् सुखेन जीवितवान् सः ।



# आर्यः

15

केषाञ्चित् वर्षाणाम् अनन्तरं शान्तिदेवः छद्मवेषेण आगत्य वीरसिंहस्य विरोधम् आचरतां विद्रोहिणां मार्गदर्शनं करोति । सः जयानन्देन मिलति । जयानन्दमुनिः वदति – भवत्पुत्रः आश्रमे एव वसतु इति । विद्रोहिनायकं वसन्तं शान्तिदेवः वदति – 'अस्माकं गुप्तस्थानं शत्रुभिः ज्ञातं स्यात्' इति । लघुयुद्धे सेनापतिः अमरसिंहः प्राणैः वियुक्तः भवति । शान्तिदेवः गम्भीरतया व्रणितः भवति ।

## राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि-अय्यः

वसन्तः शान्तिदेवं जलप्रपातसमीपे स्थितां गुहां प्रति नयति । राजानं भूमौ शाययित्वा जलस्य आनयनाय गच्छति ।











वसन्त ! मम परिचयः मया कुत्रापि न प्रकटितः ।

मया अपि भवतः परिचयः न प्रकटितः ।

महाराज ! व्रणः तीव्रः न स्यात् । यदा प्रातःकालः भवति...

वसन्त ! प्रायः प्रातःकालपर्यन्तम् अहं न भवेयम् ।

वसन्तः व्रणात् निर्गच्छत् रक्तं पश्यति । व्रणं वस्त्रेण बध्नाति ।

वसन्त ! श्वः

यत् वक्तुम् इष्यते तत् श्वः उच्यताम् ।

कालविलम्बः न उचितः । मम अनुपस्थितौ अपि भवता आन्दोलनम् अनुवर्तनीयम् ।

महाराज ! यदि भवान् एव न भवेत् तर्हि किम् आन्दोलनेन ?

भवतः अनुपस्थितौ वयं कस्य निमित्तं युद्धं कुर्याम ? न राज्ञी, न वा राजकुमारः....

राजकुमारः जीवति वसन्त !

किं राजकुमारः जीवति ?

सः जयनन्द-स्वामिनः आश्रमे अस्ति । संरक्षकेण सता भवता तस्य पालनपोषणादिकं करणीयम् । कदाचित् वा सः स्वस्य...

वसन्तः मन्दं राज्ञः शिरः भूमौ स्थापयति ।

गुहायाः मुखप्रदेशे स्थित्वा उषःकालस्य प्रतीक्षां करोति ।


राजकुमारः जयानन्दस्य आश्रमे अस्ति । अहं मुनिं मार्गदर्शनं याचामि । अहो कोऽपि पादध्वनिः श्रूयते इव...


वसन्तः आश्चर्यान्वितः भवति...
ते तरुणाः आश्रमवासिनः इव भान्ति ।


मुनिः राज्ञः मरणं किं पूर्वमेव जानाति स्म ?
वयं योगिनः जयानन्दस्य शिष्याः ।
आश्रमं प्रति राज्ञः कलेवरस्य नयनाय तेन वयं प्रेषिताः स्मः ।
आम् ! ह्यः रात्रौ तेन तत् ज्ञातम् ।


कश्चन शिष्यः शवयानं सज्जीकरोति ।
प्रातःकालात् पूर्वम् एव अस्माभिः आश्रमः प्राप्तव्यः ।


राज्ञ्याः स्मारकस्य पार्श्वे एव राज्ञः स्मारकम् अपि निर्मातव्यम् इति तस्य आदेशः ।


वसन्तः आश्रमवासिनः च राज्ञः शवयानम् उन्नीय प्रतिष्ठन्ते ।


प्रातःकालाभ्यन्तरे ते आश्रमं प्राप्नुवन्ति ।


जयानन्दः राज्ञः शवयानस्य स्वागताय कुटीरात् बहिः आगच्छति ।


शरीरं गर्ते निक्षिप्यताम् ।


वसन्तः मुखम् उन्नीय पश्यति । लघुः बालकः तेन दृश्यते ।
राजकुमारः !


बालकः जयानन्दस्य निर्देशस्य अनुसारम् अनुष्ठानं करोति ।


शरीरं गर्तस्य अन्तः स्थाप्यते । राजकुमारः शरीरस्य उपरि पुष्पाणि स्थापयति ।
आर्य ! इदानीं ते गर्तं मृत्तिकया पूरयन्तु ।


जयानन्दस्य सङ्केतं प्राप्य शिष्याः ततः निर्गच्छन्ति ।


वसन्तः योगिनं प्रणमति ।
मान्यवर ! माम् आशीर्वादेन अनुगृह्णातु ।


शूलेन व्रणितः राजा सजीवं स्थातुं न अर्हति इति अहं जानामि स्म ।
तस्य शवस्य निखननं कुत्र करणीयम् इति मया निर्णीतम् आसीत् ।
अनुवर्तते

# विद्युदभावोपेतानि दिनानि

"अहो ! महान् घर्मः ! अम्ब, व्यजनं चालयतु कृपया" इति मातरम् अवदत् वीणा सोफासने उपविशन्ती । किन्तु माता तु न उत्थितवती एव । तावता परितः दृष्ट्वा वीणा अवगतवती यत् गृहे विद्युत् नास्ति इति । "अहो ! गृहे विद्युत् नास्ति इति भाति । किमर्थं न समीकारितम् ?" इति अपृच्छत् वीणा ।



"गृहे सर्वं सम्यक् एव अस्ति । किन्तु सर्वकारेण विद्युतः दाने न्यूनता घोषिता अस्ति । इतः परं प्रतिदिनं घण्टात्रयं विद्युत् न भविष्यति" इति अवदत् माता ।

'एतस्मिन् घोरे घर्मकाले विद्युत् एव न भवति चेत् कथं गृहे स्थातुं शक्नुयाम वयम् ?" – असन्तोषेण अवदत् वीणा ।

"नान्या गतिः वत्से ! विद्युदुत्पादनक्षेत्रे पर्याप्तमात्रेण वृष्टिः न भवति एषु दिनेषु । अतः यावती आवश्यकता तावती विद्युत् न उत्पाद्यते राज्ये" इति अवदत् माता ।

मन्दगत्या जलं पिबन्ती अपृच्छत् वीणा – "अम्ब ! उत्पादितायाः विद्युतः सञ्चयाय किमस्ति कोऽपि मार्गः ?" इति ।

"कुतो न ? विद्युच्छक्तेः अपव्ययः विविधैः मार्गैः सम्भवति । तत् आदौ निवारणीयम् अस्माभिः । यदा आवश्यकता न भवति तदा दीप-व्यजनादीनां स्थगनम् अपि महते लाभाय भवेत्" इति अवदत् माता ।

'प्रकोष्ठात् निर्गमनसमये मया प्रायः एषः एव अंशः सदा विस्मर्यते' इति अचिन्तयत् वीणा ।

माता स्वस्य कथनम् अनुवर्तितवती – "विद्युतः सञ्चयाय अन्ये अपि मार्गाः सन्ति । दीर्घकालं यावत् शीतकस्य द्वारम् उद्घाट्य स्थापनं विद्युतः अपव्ययाय भवति । स्नान-समनन्तरम् जलतापकयन्त्रस्य स्थगनात् अपि विद्युतः सञ्चयः भवेत् । आवश्यकतायाम् असत्याम् अविस्मृत्य विद्युच्छक्तेः स्थगनं करणीयम् इति तु कथनस्य सारः" इति ।

"भवत्या उक्तम् अवश्यम् अनुसरिष्यामि अम्ब !" इति उक्तवती वीणा ।

# पृच्छ्यतां भवताम् पृच्छ्यतां भवताम्

## भवदर्थं विज्ञानम्

### रुचेः अभिज्ञानम्



अस्माकं पञ्च इन्द्रियाणि भवन्ति । तेषु अति-दुर्बलम् अस्ति रसेन्द्रियम् । अस्माकं जिह्वायाः उपरि रुचिकलिकाः भवन्ति । तासां द्वारा वयम् आहारस्य रुचेः अनुभवं प्राप्नुमः ।

किन्तु ताः रुचिकलिकाः मधुरः, लवणः, कषायः, तिक्तः इत्येताः प्रमुखाः चतस्रः रुचीः एव अवगन्तुं शक्नुवन्ति । अन्यासां रुचीनाम् अवगमनाय अस्माभिः घ्राणेन्द्रियस्य अवलम्बनं करणीयं भवति । अतः एव पीनसकाले वयं सेव्यमानस्य आहारस्य रुचिं सम्यक् अवगन्तुं न शक्नुमः ।

अन्येषां जीविनां घ्राणशक्तिः यावती भवति तावती शक्तिः मानवस्य न भवति । तथापि परिमलोपेतानां वस्तूनां रुचेः ग्रहणे मानवस्य एव सामर्थ्यम् अधिकम् । मीनाः रुचेः आस्वादनाय पक्षौ, पुच्छं, मुखं च अवलम्बन्ते । पतङ्गादीनां शरीरे रुचिकलिकाः तेषां पादेषु भवति ।

## भवतां परिसरः

### मण्डूकाः वयं न पातुं शक्नुमः जलम्

मण्डूकः उभयजीवी इति भवन्तः जानीयुः एव । सः आजीवनं जले जलस्य पार्श्वे वा भवति । मण्डूकी स्वस्य अण्डानि जलपार्श्वे एव प्रसुते । ततः उत्पन्नाः मण्डूकशावकाः मीनाः इव जले तरणे समर्थाः भवन्ति । एवं स्थिते अपि मण्डूकाः बिन्दुमात्रं जलम् अपि पातुं समर्थाः न ! यतः जलपानाय अपेक्षितम् अङ्गम् एव न भवति तेषाम् ।

सृष्टौ आदौ जलचराः उत्पन्नाः । ततः भूमौ वासं कर्तुं योग्येषु जीविषु सर्वादौ उत्पन्नः मण्डूकः एव इति भाव्यते । जलं विना कोऽपि जीवी जीवितुं न अर्हति । एवं तर्हि मण्डूकानां जलसेवनं कथम् ? तच्च भवति चर्मद्वारा । अत्र अनानुकूल्यं नाम यदा ते वायुसेवनाय भूमिम् आगच्छन्ति तदा तेषां चर्म शुष्कं भवति । अतः एव मण्डूकाः सर्वदा अपि जलस्य पार्श्वे एव निवसन्ति प्रायः ।



# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### सञ्चाराय आवश्यके नेत्रे !

यदा नेत्रयोः बन्धनं कृतं भवति तदा ऋजुगत्या गमनं क्लेशाय इत्यत्र किं विश्वसन्ति भवन्तः ? विश्वसनीयम् एव, यतः बहवः प्रयोगाः एतम् अंशं प्रमाणीकृतवन्तः सन्ति । दृष्टिहीनतावसरे वयम् ऋजुरेखाम् अनुसृत्य हस्तौ नेतुम् अपि न शक्नुमः ।

एतस्य कारणम् अस्ति – अस्माकं शरीरस्य रचना । अस्माकं शरीरस्य रचना पूर्णतः



समभारोपेता न । अस्थिपञ्जरं, स्नायुरचना, पृष्ठास्थ्नः अदृढता इत्यादयः अत्र कारणानि भवन्ति ।

यदा वयं नेत्रयोः निमीलनं कुर्मः तदा स्नायुसंरचनाधारिता, शरीरसंरचनावलम्बिता च गतिः विषमतां गच्छति । अतः एव सञ्चारसमये पादौ यथा, तथैव नेत्रे अपि अपेक्ष्येते एव अस्माभिः ।

## भारतम् अवगम्यताम्

भाषाः साहित्यं च अधिकृत्य सन्ति अत्रत्याः प्रश्नाः ।

१. 'बुद्धचरित'नामकस्य ग्रन्थस्य रचयिता कः ?





२. कः ज्ञानपीठप्रशस्तिं प्राप्तवत्सु प्रथमः ?

३. तमिळुरामायणं कः अरचयत् ?





४. कृष्णदेवरायस्य आस्थाने स्थितः सः कः, यश्च कविः विदूषकः च आसीत् ?

५. मराठीभाषीयायाः 'केसरी'पत्रिकायाः संस्थापकः कः, यस्याः च सम्पादकः आसीत् बालगङ्गाधरतिलकः अपि ?



*(उत्तराणि ६६ तमे पृष्ठे)*

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः?**



KALANIKETAN BABU



NARAYANAMURTHY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा** (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'सप्टम्बर्'मासस्य चित्रशीर्षिकाप्रेषिका - .

**श्रीमती महालक्ष्मी गौरीशङ्कर**
३, रागमालिका अपार्टमेण्ट्स्
महालक्ष्मी एवेन्यू, तरुवान्मियूरु,
चेन्नै - ६०० ०४१




**क्षुन्निवारणार्थं ताम्रचूडनयनम्**
**उदरपोषणार्थं सौम्यनागनर्तनम् ।**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. अश्वघोषः ।
२. सि. शङ्करकुरुप् (मलयालम्) ।
३. कम्बः ।
४. तेनालीरामः ।
५. विष्णुचिपळूणकरः (१८५०-१९५२) ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

Chandamama (Sanskrit) November 2004
Regd No. TN/PMG(CCR)-589/03-05
Regd. with Registrar of Newspaper for India No. 42664/85
Licensed to post without prepayment No. 371/03-05 Foreign - WPP. No. 372/03-05




India's largest selling sweets & toffees.




# Be the luckiest one in town!

Collect wrappers to complete the lucky letters "NUTRINE ECLAIRS", answer the question and you can win fabulous prizes!



**100** Nokia camera mobile phones to be won!



**100** LG 14" Colour TV's to be won!



**5000** Nutrine Watches to be won!



**20,000** Business Games to be won!

*Conditions apply




Answer the question below(please tick):

**How many letters form the words "NUTRINE ECLAIRS"**

☐ 10 ☐ 12 ☐ 14

Name .................................... Age ..........
Door No. ....... Street ...................................
Town/Village ........................ District ....................
State .............. Pincode .............. Telephone ..................

Send the wrappers to :
Nutrine, Post Box. No. 1056, Kilpauk, Chennai - 10

NUTRINE CONFECTIONERY COMPANY PVT. LTD., 2-1250, E.V. REDDY COLONY, CHITTOOR - 517 001 (A.P.)